| | | |
|---|---|---|
| अणितव्यम्, | आणयितव्यम्, | अणिणिषितव्यम्; |
| अणनीयम्, | आणनीयम्, | अणिणिषणीयम्; |
| आण्यम्, | आण्यम्, | अणिणिष्यम्; |
| ईषदणः - दुरणः - स्वणः; | | |
| अण्यमानः, | आण्यमानः, | अणिणिष्यमाणः; |
| आणः, | आणः, | अणिणिषः; |
| अणितुम्, | आणयितुम्, | अणिणिषितुम्; |
| [1]आण्टिः, | आणना, | अणिणिषा, आणिणयिषा; |
| अणनम्, | आणनम्, | अणिणिषणम्; |
| अणित्वा, | आणयित्वा, | अणिणिषित्वा; |
| प्राण्य, | प्राण्य, | समणिणिष्य; |
| आणम् 2 } अणित्वा 2 | आणम् 2, } आणयित्वा 2, | अणिणिषम् 2 } अणिणिषित्वा 2 }; |

(18) "अण प्राणने" (IV. दिवादिः-1175 अक. से. आ.)

[A]'अणेरणति शब्दार्थे प्राणते स्वण्यते श्यनि' (श्लो 92) इति देवः।

| | | |
|---|---|---|
| आ[2]णकः-णिका, | आणकः-णिका, | अणिणिषकः-षिका; |
| अणिता-त्री, | आणयिता-त्री, | अणिणिषिता-त्री; |
| आणयन्-न्ती,आणयिष्यन्-न्ती-ती; | | |
| अण्य[3]मानः, | आणयमानः, | अणिणिषमाणः; |
| अणिष्यमाणः | आणयिष्यमाणः, | अणिणिषिष्यमाणः; |
| [4]प्राण्-प्राणौ-प्राणः; | | |
| अणितः-तम् तवान्, | आणितः, | अणिणिषितम्-तः-तवान्; |
| अणः, आणः, | अणिणिषुः, | आणिणयिषुः; |

1 'अनुनासिकस्य–' (6-4-15) इति दीर्घः। ष्टुत्वम्।

2. 'अत उपधायाः' (7-2-116) इति वृद्धिः।

3. दिवादित्वात् श्यन्।

4. 'अनुनासिकस्य—' (6-4-15) इति उपधायाः दीर्घः।

A. 'अन' इति नकारान्तः, तवर्गीयान्तेषु पाठात्—इति शाकटायनः

अणितव्यम्, आणयितव्यम्, अणिणिषितव्यम्;

अणनीयम्, आणनीयम्, अणिणिषणीयम्;

आण्यम्, आण्यम्, अणिणिष्यम्;

ईषदणः, दुरणः, स्वणः; ईषदाणः, दुराणः, स्वाणः;

अण्यमानः, आण्यमानः, अणिणिष्यमाणः;

आणः, आणः, अणिणिषः;

अणितुम्, आणयितुम्, अणिणिषितुम्;

आ[1]ण्टिः, आणना, अणिणिषा, आणिणयिषा;

अणनम्^, आणनम्, अणिणिषणम्;

अणित्वा, आणयित्वा, अणिणिषित्वा;

प्राण्य, प्राण्य, प्राणिणिष्य;

आणम् २, } आणम् २, } अणिणिषम् २; }

अणित्वा २, } आणयित्वा २, } अणिणिषित्वा २; }

(19) "अत सातत्यगमने" (I-भ्वादिः-38-सक. से. पर.)

'धन्धनेऽन्तति, सातत्यगमनेऽतति, चिन्तयेत।' (श्लो. ९४) इति देवः।

सातत्यगमनम्=सन्ततगमनम्।

आतकः-तिका, आतकः-तिका, अतितिषकः-षिका;

अतिता-त्री, आतयिता त्री, अतितिषिता-त्री;

(अ) अतन्-न्ती, आतयन्-न्ती, अतितिषन्-न्ती;

अतिष्यन्-न्ती-ती, आतयिष्यन्-ती-न्ती, अतितिषिष्यन्-न्ती-ती;

आतयमानः, आतयिष्यमाणः;

अत्-अतौ-अतः, मार्गात्;

(आ) अतितम्-तः-तवान्, आतितः, अतितिषितम्-तः-तवान्;

अतः[A], पदातिः[1], मार्गातः, आतः, अतितिषुः, आतितयिषुः ;
अतितव्यम्, आतयितव्यम्, अतितिषितव्यम् ;
अतनीयम्, आतनीयम्, अतितिषणीयम् ;
आत्यम्, आत्यम्, अतितिष्यम् ;
ईषदतः, दुरतः, स्वतः; ईषदातः, दुरातः, स्वातः ;
अत्यमानः, आत्यमानः, अतितिष्यमाणः ;
आतः, आतः, अतितिषः ;
अतितुम्, आतयितुम्, अतितिषितुम् ;
अत्तिः, आतना, अतितिषा, आतितयिषा ;
अतनम्, आतनम्, अतितिषणम् ;
अतित्वा, आतयित्वा, अतितिषित्वा ;
समत्य, समात्य, समतितिष्य ;
आतम् २, } आतम् २, } अतितिषम् २ ; }
अतित्वा २, } आतयित्वा २, } अतितिषित्वा २ ; }
[2]अतिथिः, आत्मा[3] ॥

(20) "अति बन्धने" (I-भ्वादिः-61-सक. सेट्. पर.)

'बन्धनेऽन्तति, सातत्यगमनेऽतति, चिन्तयेत् ।' (श्लो 94) इति देवः ।
अन्तक[B]ः-न्तिका, अन्तकः-न्तिका, अन्ति[4]तिषकः-षिका ;
अन्तिता-त्री, अन्तयिता-त्री, अन्तितिषिता-त्री ;
अन्तन्-न्ती, अन्तयन्-न्ती, अन्तितिषन्-न्ती ;
अन्तिष्यन्-ती-न्ती, अन्तयिष्यन्-ती-न्ती, अन्तितिषिष्यन्-ती-न्ती ;

---

A. "अभियाऽऽतापरं शुभ्रं भूभृतं दधिरं पुरः । बृंहितं प्रस्थितं धाम समस्तं पुष्करेक्षणम् ।" भ. का. 10-21. अतस्यापरः । पचाद्यच्

1. 'पादस्य पदाज्यातिगोपहतेषु' (6-3-52) इति पद्भावः । औणादिक इण् प्रत्ययः ।

2. दशपाद्युणादौ 4-11. इथिन् प्रत्ययः ।

3. मनिण् प्रत्ययः 6-81. द-उ.

4. 'न न्द्राः संयोगादयः' (6-1-3) इति नकारस्य द्वित्वनिषेधः ।

B. 'अतदर्कास्त्वत्र विदर्भमाधवाः प्रखर्वशैलैरसमन्तितान्तिकाः । धुनान्तुकेधितगजेन्द्ररोधिनस्तुमन्तु सन्तो गुणबिन्दुसोद्गमाः ॥' (धा. का. 1-9.)

अन्तयमानः, अन्तयिष्यमाणः ;

अन्[1], अन्तौ, अन्तः ;

अन्वितम्-तः-तवान्, अन्तितः, अन्तितिषितम्-तः-तवान् ;

अन्तः, समन्ती, अन्तितिषुः, अन्तितयिषुः ;

अन्तितव्यम्, अन्तयितव्यम्, अन्तितिषितव्यम् ;

अन्तनीयम्, अन्तनीयम्, अन्तितिषणीयम् ;

अन्त्यम्, अन्त्यम्, अन्तितिष्यम् ;

ईषदन्तः, दुरन्तः, स्वन्तः ;

अन्त्यमानः, अन्त्यमानः, अन्तितिष्यमाणः ;

अन्तः, अन्तः, अन्तितिषः ;

अन्तितुम्, अन्तयितुम्, अन्तितिषितुम् ;

अन्ता, अन्तना, अन्तितिषा, अन्तितयिषा ;

अन्तनम्, अन्तनम्, अन्तितिषणम् ;

अन्तित्वा, अन्तयित्वा, अन्तितिषित्वा ;

समन्त्य, समन्त्य, समन्तितिष्य ;

अन्तम् २, अन्तित्वा २, } अन्तम् २, अन्तयित्वा २, } अन्तितिषम् २ ; अन्तितिषित्वा २ }

(21) " अद भक्षणे " (II-अदादिः-1011-सक-अनि. पर.)

आदकः-दिका, आदकः-दिका, जिघत्सकः-त्सिका ;

अत्ता-त्री, आदयिता-त्री, जिघत्सिता, त्री ;

अदन्-ती, आदयन्-न्ती, जिघत्सन्-न्ती ;

अत्स्यन्-ती-न्ती, आदयिष्यन्-ती न्ती, जिघत्सिष्यन्-ती-न्ती ;

आ[1]द्यमानः, आदयिष्यमाणः ;

सस्या[2]त्, आमात्, क्रव्यात्[B] [3], क्रव्या[4]दः, प्रा[C]णात्, आमिषा[D]दः ;

[5]जग्धम्-ग्धः-ग्धवान्, } आदितम्-तः, जिघत्सितम्-तः-तवान्,
[6]अन्नम्-न्नवान् ; }

[7]घसः, अन्ना[8]दी, पुत्रादिनी, आदिवान्, जक्षि[9]वान्, अद्[10]मरः, जिघत्[E]सुः,

अत्तव्यम्, आदयितव्यम्, जिघत्सितव्यम् ;

अदनीयम्, आदनीयम्, जिघत्सनीयम् ;

आद्यम्, आद्यम्, जिघत्स्यम् ;

ईषददः-दुरदः-स्वदः ;

अद्यमानः, आद्यमानः, जिघत्स्यमानः ;

[11]घासः, घसः, [12]न्यादः[F], निघसः, आदः, [G]संघसः[13], प्रघसः, जिघत्सः ;

[14]अत्तुम्-आदको (वा याति), आदयितुम्, जिघत्सितुम् ;

---

1. 'अदेः प्रतिषेधः' (वा-1-3-87) इति अस्य भक्षणार्थत्वेऽपि आत्मनेपदित्वमेव ।
2. 'अदोऽनन्ने' (3-2-68) इति विट् ।
3. 'क्रव्ये च' (3-2-69) इति विट् ।
4. 'वाऽसरूपो–' (3-1-94) इति न्यायेनाणपि ।
5. 'अदो जग्धिर्ल्यप्ति किति' (2-4-36) इति जग्ध्यादेशः ।
6. 'बहुलं तणि, अन्नमघस–' (2-4-54) इति वार्तिकात् प्रयोगोऽयमपि साधुः । 'अन्नाण्णः' (4-4-85) इति निर्देशाच्च ।
7. इति घस्लृ ।
8. 'सुप्यजातौ–' (3-2-78) इति णिनिः ।
9. 'लिट्यन्यतरस्याम्' (2-4-40) इति घस्लृ विकल्पेन । 'वस्वेकाज्–' (7-2-67) इति इट् ।
10. 'सृघस्यदः क्मरच्' (3-2-160) इति तच्छीलादिषु कर्तृषु क्मरच् प्रत्ययः ।
11. 'घञपोश्च' (2-4-38) इति घस्लृ ।
12. 'नौ ण च' (3-3-60) इति वा अप् ।
13. 'उपसर्गेऽदः' (3-3-59) इत्यप् ।
14. 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' (3-3-10) इति तुमुन्ण्वुलौ ।

अदनम्, आदनम्, जिघत्सनम्;
जग्धिः, आदना, जिघत्सा, जिघत्सयिषा;
जग्ध्वा, आदयित्वा, जिघत्सित्वा;
प्रजग्ध्य, समाद्य, प्रजिघत्स्य,

| | | |
|---|---|---|
| आदम् २, जग्ध्वा २, | आदम् २, आदयित्वा २, | जिघत्सम् २; जिघत्सित्वा २ |

[1]अत्रिः, [2]अद्रिः;

## (22) 'अदि बन्धने' (I-भ्वादिः-62-सक. से. पर.)

धातोरस्य पूर्वलिखितान्तिवत् (20) सर्वाणि रूपाणि बोध्यानि ।

## (23) "अन प्राणने" (II-अदादिः-1070-अक. से. पर.)

प्रपूर्वकोऽयं प्रायेण ।

आनकः-निका, आनकः-निका, अनिनिषकः-षिका;
अनिता-त्री, आनयिता-त्री, अनिनिषिता-त्री;

| | | |
|---|---|---|
| अनन्-ती, [3]प्राणन् [A], | आनयन्-न्ती, प्राणयन् [B] | अनिनिषन्-न्ती; |

प्राणिष्यन्-ती-न्ती, प्राणयिष्यन्-ती-न्ती, [4]प्राणिणिषिष्यन्-न्ती-ती;
प्राणयमानः, प्राणयिष्यमाणः;
हे [5]प्राण्; प्रा-[6]प्राणौ-प्राणः;
प्राणितम्-तः-तवान्; आनितम्-तः, अनिनिषितम्-तः-तवान्;

---

1. औणादिकः त्रिन् प्रत्ययः (द. उ. 1.37.) । अत्रिः ।
2. औणादिकः (द. उ. 1-34.) क्रिन् प्रत्ययः ।
3. 'अनितेः' (8-4-19) इति णत्वम् ।
4. 'उभौ साभ्यासस्य' (8-4-21) इति णत्वम् ।
5. 'पदान्तस्य' (8-4-37) इति निषेधं बाधित्वा 'अन्तः' (8-4-20) इति णत्वम् ।
6. क्विपि, 'अनुनासिकस्य क्वि—' (6-4-15) इति दीर्घः । 'नलोपः प्रातिपदिकान्तस्य' (8-2-7) इति नकारलोपः ।

A. 'न जिजीवासुखो यावत् प्राणता रहितस्त्वया' भ. का. 14-58.
B. 'प्राणयन्तमरिं प्रोचे राक्षसेन्द्रो विभीषणम्' भ. का. 9-101.

प्राणः, प्राणः, अनिनिषुः, [C]प्राणिणिषुः, आनिनयिषुः ;
प्राणितव्यम्, प्राणयितव्यम्, प्राणिणिषितव्यम् ;
प्राणनीयम्, आननीयम्, अनिनिषणीयम् ;
प्राण्यम्, प्राण्यम्, प्राणिणिष्यम् ;
ईषदनः-दुरनः-स्वनः ;
अन्यमानः, आन्यमानः, अनिनिष्यमाणः ;
प्राणः[D], अपानः, व्यानः, उदानः, समानः, प्राणः, अनिनिषः ;
अनितुम्, आनयितुम्, अनिनिषितुम् ;
आन्तिः[1], प्राणना, अनिनिषा, आनिनयिषा ;

अननम्, प्राणनम्, } आननम्, अनिनिषणम् ;

अनित्वा, आनयित्वा, अनिनिषित्वा ;
प्राण्य, प्राण्य, प्राणिणिष्य ;
प्राणम् २, अनित्वा २, } प्राणम् २, आनयित्वा २, } अनिनिषम् २, अनिनिषित्वा २ }

(24) " अन्चु गतिपूजनयोः " ( I-भ्वादिः-188-स-पर.से.)

'गतियाचनयोरञ्चत्यञ्चते, णौ विशेषणे। अञ्चयत्यञ्चतीत्येकं गतिपूजनयोरपि ॥' इति (श्लो 50) देवः ।
अञ्चकः-ञ्चिका, अञ्चकः-ञ्चिका, अञ्चिचिषकः-षिका ;
अञ्चिता-त्री, अञ्चयिता-त्री, अञ्चिचिषिता-त्री ;
अञ्चन्-न्ती, अञ्चयन्-न्ती, अञ्चिचिषन्-न्ती ;
अञ्चिष्यन्-ती-न्ती, अञ्चयिष्यन्-ती-न्ती, अञ्चिचिषिष्यन्-ती-न्ती ;
अञ्चयमानः, अञ्चयिष्यमाणः ;

---

1. 'अनुनासिकस्य क्वि—' (6-4-15) इति दीर्घः ।
C. 'प्राणिणिषुर्न पपोऽयं मोऽस्माक्षीत् प्रमदावनम् ।' भ. का. 9-101.
D. 'उदश्वसन् प्राणमिवाप्य काश्चित् दृष्ट्वा सलीलं मृदु जक्षतं तम्' धा. का. 2-51.

[1]प्राङ्, उदङ्, देवद्र्यङ्, तिर्यङ्, अङ्[A]यङ्, न्यङ्[A], सध्र्यङ्, सध्री[B]ची;

अञ्चितम्[2]-तः[C]-तवान्,<br>अक्तम्-क्तः-क्तवान्,<br>[3]समक्नः-समक्नवान्, } अञ्चितम्-तः-तवान्, } अञ्चिचिषितम्-तः-तवान्;

अञ्चः, अञ्चः, अञ्चिचिषुः, अञ्चिचयिषुः;

अञ्चितव्यम्, अञ्चयितव्यम्, अञ्चिचिषितव्यम्;

अञ्चनीयम्, अञ्चनीयम्, अञ्चिचिषणीयम्;

अङ्क्यम्,<br>[4]अन्च्यम्, } अन्च्यम्, अञ्चिचिष्यम्;

ईषदञ्चः, दुरञ्चः, स्वञ्चः;

अन्च[5]यमानः,<br>अच्यमानः, } अन्च्यमानः, अञ्चिचिष्यमाणः;

अञ्चः, [6]उदङ्कः,[D]<br>अङ्कः, } अञ्चः, अञ्चिचिषः;

---

1. 'ऋत्विग्–' (3-2-59) इत्यादिना क्विन्। 'अनिदितां–' (6-4-24) इति नलोपे, 'उगिदचां–' (7-1-70) इति नुम्। नुमो नकारस्य, 'क्विन्प्रत्ययस्य कुः' (8-2-62) इति कुत्वम्।
2. 'अञ्चेः पूजायाम्' (7-2-53) इतीट्। गतौ तु नलोपः।
3. 'अञ्चोऽनपादाने' (8-2-48) इति निष्ठानत्वम्। अपादाने तु 'उद्धृतमुदकं कूपात्' इति भवति। 'उदितो वा' (7-2-56) इति क्त्वायां इड्विकल्पात् 'यस्य विभाषा' (7-2-15) इतीण्णिषेधः।
4. गत्यर्थे निष्ठायामनिट्त्वात् कुत्वम्। पूजायां 'अञ्चेः पूजायाम्' (7-2-53) इति सेट्त्वात् कुत्वाभावः। 'चजोः कु घिण्यतोः' (7-3-52) इति कुत्वम्।
5. 'नाञ्चेः पूजायाम्' (6-4-30) इति पूजायां नलोपनिषेधः। गतौ तु 'अनिदिताम्–' (6-4-24) इति नलोपः।
6. 'उदङ्कोऽनुदके' (3-3-123) इति घञन्तो निपातितः।

A. 'अन्वग्यद् राजसुतौ रामः न्यञ्चस्तं प्राप्य मद्विधाः' भ. 5-36.
B. 'सीतां सौमित्रिणा सार्धं सध्रीचीं ग्रस्तुमैच्छत्' भ. 6-7.
C. 'उच्चैरञ्चितलाङ्गूलः शिरोऽञ्चितमिव सवहन्' भ. 9-40.
D. 'हृदयोदङ्कसंस्थानं ह्यान्ताऽऽनायपरिभ्रमम्' भ. 7-83.

अञ्चितुम्, } अञ्चयितुम्, अञ्चिचिषितुम्;
अक्तुम्,

अञ्चा, अञ्चना, अञ्चिचिषा, अञ्चिचयिषा;

अञ्चनम्, } अञ्चनम्, अञ्चिचिषणम्;
उदकोदञ्चनः,

अञ्चित्वा, } अञ्चयित्वा, अञ्चिचिषित्वा;
अक्त्वा,

समञ्च्य, } प्राञ्च्य, समञ्चिचिष्य;
समच्य,

अञ्चम् २, } अञ्चम् २, } अञ्चिचिषम् २; }
अञ्चित्वा २, अक्त्वा २, } अञ्चयित्वा २, } अञ्चिचिषित्वा २ }

## (25) "अन्चु गतौ याचने च" (I-भ्वादिः-862. उभ.सक.से.)

'गतियाचनयोरञ्चत्यञ्चते, णौ विशेषणे। अञ्चयत्यञ्चतीत्येकं गतिपूजनयोरपि॥' इति (श्लो 50) देवः। शानचि-अञ्चमानः, अञ्चिष्यमाणः, अञ्चिचिषमाणः, अञ्चिचिषिष्यमाणः, इत्यादिरूपाणि अधिकानि। अवशिष्टानि गतिपूजनार्थक (24) धातौ गत्यर्थकधातुवत् ज्ञेयानि। 'अचि' इति पाठे तु निष्ठायां अञ्चितः इत्येकमेव रूपम्। 'अनिदिताम्—' (6-4-24) इति नलोपो न भवति। "अचु" इति पाठे तु अचन्-अचन्ती इत्यादिरूपाणि। क्त्वायाम्, 'उदितो वा' (7-2-56) इतीड्विकल्पः—अचित्वा-अक्त्वा इति रूपे। निष्ठायां तु 'यस्य विभाषा' (7-2-15) इति वचनात् अक्तम्-इत्येकमेव रूपम्।

## (26) 'अन्चु विशेषणे' (X-चुरादिः-1739. उभ. से.)

विशेषणम्=व्यावर्तनम्। उदित्करणात् विभाषितो णिच्। 'गतियाचनयोरञ्चत्यञ्चते णौ विशेषणे। अञ्चयत्यञ्चतीत्येकं गतिपूजनयोरपि॥' इति (श्लो-50) देवः। णिच्पक्षे गतिपूजनार्थकधातौ (24) णिजन्तरूपाणीव, णिजभावपक्षे च भौवादिकगत्यर्थका (24) न्चुधातुवद्रूपाणीति च ज्ञेयानि॥

## (27) " अन्जू व्यक्तिम्रक्षण(क्षण)कान्तिगतिषु "

(VII–रुधादिः - 1458-सक. वेट्-पर.)

व्यक्तिः = प्रकटता । म्रक्षणं = घृतादिसेकः ।

व्यञ्जकः-ञ्जिका, व्यञ्जकः - अञ्जिका, अञ्जिजिष[1]कः - षिका ;

अञ्जिता - त्री, } [1A]व्यङ्क्ता-त्री, } अञ्जयिता-त्री, अञ्जिजिषिता - त्री ;

[2]व्यञ्जन् - न्ती, व्यञ्जयन्-न्ती, अञ्जिजिषन् - न्ती ;

व्यञ्जिष्यन् - } व्यङ्क्ष्यन् - } न्ती, ती, व्यञ्जयिष्यन्-न्ती, ती, अञ्जिजिषिष्यन् -न्ती-ती;

व्यञ्जयमानः, व्यञ्जयिष्यमाणः ;

व्यन् - व्यञ्जौ - व्यञ्जः ;

व्यक्तम्-क्तः-क्तवान् , व्यञ्जितम् , अञ्जिजिषितम्-तः-तवान् ;

अञ्जः, अञ्जः, अञ्जिजिषुः , व्यञ्जिजिषुः[A], अञ्जिजयिषुः ;

व्यञ्जितव्यम् , } अङ्क्तव्यम् , } अञ्जयितव्यम् , अञ्जिजिषितव्यम् ;

व्यञ्जनीयम् , व्यञ्जनीयम् , अञ्जिजिषणीयम् ;

[3]व्यङ्ग्यम् , } [4]आज्यम् , } व्यञ्ज्यम् , अञ्जिजिष्यम् ;

ईषदञ्जः- दुरञ्जः-स्वञ्जः;

[5]व्यज्यमानः, व्यञ्ज्यमानः, अञ्जिजिष्यमाणः ;

अङ्गः, अञ्जः, अञ्जिजिषः ;

---

1. 'स्मिपूङ्रञ्ज्वशां सनि' (7-2-74) इति नित्यमिट् ।

1. A. 'स्वरतिसूति—'(7-2-44) इति ऊदित्त्वाद्विकल्पः ।

2. 'रुधादिभ्यः' (3-1-78) इति श्नम्प्रत्यये 'श्नान्नलोपः' (6-4-23) 'श्नसोरल्लोपः' (6-4-111)।

3. 'चजोः कु घिण्ण्यतोः' (7-3-52) इति कुत्वम् ।

4. 'आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम् ।' (वा 3-1-109) इति क्यपि रूपम् । उपधानकारलोपः ।

5. 'अनिदिताम्—' (6-4-24) इति नलोपः ।

A 'संजिस्मयिषमाणोऽपात् मायां व्यञ्जिञ्जिषुः द्विषः' भ. का. 9-53.

व्यञ्जितुम्, } अञ्जयितुम्, अञ्जिजिषितुम्;
व्यङ्क्तुम्, }

व्यक्तिः, } अञ्जना, व्यञ्जिजिषा, व्यञ्जिजयिषा;
व्यञ्जा, }

व्यञ्जनम्, व्यञ्जनम्, अञ्जिजिषणम्;

अञ्जित्वा }
[1]अक्त्वा } अञ्जयित्वा, अञ्जिजयिषित्वा;
अङ्क्त्वा }

अभिव्यज्य, अभिव्यञ्ज्य, समञ्जिजिष्य;

अञ्जम् २, अक्त्वा २, } अञ्जम् २, } अञ्जिजिषम् २; }
अञ्जित्वा २, अङ्क्त्वा २, } अञ्जयित्वा २, } अञ्जिजिषित्वा २; }

अञ्जलिः,[2]

## (28) 'अन्ध दृष्ट्युपघाते'

(X-चुरादिः- 1925. सक. सेट्-उभ-)

'उपसंहारे' इत्येके।

अन्धकः-न्धिका, अन्दिधयिषकः-षिका;
अन्धयिता-त्री, अन्दिधयिषिता-त्री;
[A]अन्धयन्-न्ती, अन्दिधयिषन्-न्ती;
अन्धयिष्यन्-न्ती-ती, अन्दिधयिषिष्यन्-न्ती-ती;
अन्धयमानः, अन्दिधयिषमाणः;
अन्धयिष्यमाणः, अन्दिधयिषिष्यमाणः;
अन् - अन्धौ - अन्धः;

---

1. 'जान्तनशां विभाषा' (6-1-32) इति वा उपधानकारलोपः। 2. औणादिक अलिच् प्रत्ययः॥

A. 'यो वृश्चिकदिन एव वीर्यरहितकृत् तस्मिन् पतत्यन्धयन्
पित्रागस्य ममार दण्डितखलस्येशस्य पादाङ्कितः।
कृष्णोऽप्यथ जलाश्रितेऽतिसुखयत्यामुच्य पुष्पोत्करं
देवौघे हन्दुःखने रसयति ध्यायन्दिदं क्षितौ॥' (धा. का. 3-62)

| | |
|---|---|
| अन्धितम् - तः - तवान्, | अन्दिधयिषितम् - तः - तवान्; |
| अन्धः, [1]जनुषाऽन्धः, | अन्दिधयिषुः; |
| अन्धयितव्यम्, | अन्दिधयिषितव्यम्; |
| अन्धनीयम्, | अन्दिधयिषणीयम्; |
| अन्ध्यम्, | अन्दिधयिष्यम्; |
| ईषदन्धः - दुरन्धः - स्वन्धः; | |
| अन्ध्यमानः, | अन्दिधयिष्यमाणः; |
| अन्धः, | अन्दिधयिषः; |
| अन्धयितुम्, | अन्दिधयिषितुम्; |
| अन्धना, | अन्दिधयिषा; |
| अन्धनम्, | अन्दिधयिषणम्; |
| अन्धयित्वा, | अन्दिधयिषित्वा; |
| समन्ध्य, | समन्दिधयिष्य; |
| अन्धम् २, } | अन्दिधयिषम् २; } |
| अन्धयित्वा २, } | अन्दिधयिषित्वा २; } |

(29) "अबि शब्दे" (I-भ्वादिः- 378. अक-से-आ–)

| | | |
|---|---|---|
| अम्बकः-म्बिका, | अम्बकः-म्बिका, | अम्बिबिषकः-षिका; |
| अम्बिता-त्री, | अम्बयिता-त्री, | अम्बिबिषिता-त्री; |
| अम्बयन्-न्ती, | अम्बयिष्यन्-न्ती-ती, | —— |
| अम्बमानः, | अम्बयमानः, | अम्बिबिषमाणः; |
| अम्बिष्यमाणः, | अम्बयिष्यमाणः, | अम्बिबिषिष्यमाणः; |
| अन् - अम्बौ - अम्बः; | | |
| अम्बि^A तम्-तः-तवान्, | अम्बितः, | अम्बिबिषितम्-तः तवान्; |
| अम्बः, | अम्बः, | अम्बिबिषुः, अम्बिबयिषुः; |
| अम्बितव्यम्, | अम्बयितव्यम्, | अम्बिबिषितव्यम्; |

1. 'पुंसाऽनुजो जनुषान्ध इति वक्तव्यम्' (6-3-3-वा.) इति तृतीयाया अलुक्।

A 'सकम्पहेरम्बसमानलम्बनाः समाव्रजन् अम्बितघण्टिकास्तदा। प्रलम्बसास्नाः कबरत्विषो वृषाः अक्रोधिताः क्षीवतयाऽतिशोभराः ॥' धा. का. 1-49.

| | | |
|---|---|---|
| अम्बनीयम्, | अम्बनीयम्, | अम्बिविषणीयम्; |
| अम्ब्यम्, | अम्ब्यम्, | अम्बिविष्यम्; |
| ईषदम्बः-दुरम्बः-स्वम्बः; | | |
| अम्ब्यमानः, | अम्ब्यमानः, | अम्बिविष्यमाणः; |
| अम्बः, | अम्बः, | अम्बिविषः; |
| अम्बितुम्, | अम्बयितुम्, | अम्बिविषितुम्, |
| अम्बा, | अम्बना, | अम्बिविषा, अम्बिबयिषा; |
| अम्बनम्, | अम्बनम्, | अम्बिविषणम्; |
| अम्बित्वा, | अम्बयित्वा, | अम्बिविषित्वा; |
| समम्ब्य, | समम्ब्य, | समम्बिविष्य; |
| अम्बम् २, अम्बित्वा २, | अम्बम्, अम्बयित्वा २, | अम्बिविषम् २; अम्बिविषित्वा २; |

(30) "अभि शब्दे" (I-भ्वादि :-385. अक. से. आ.)

(29) अम्यतिवद्रूपाणि सर्वाणि ज्ञेयानि।

(31) "अभ्र गतौ" (I-भ्वादि:-556·सक. से. पर.)

| | | |
|---|---|---|
| अभ्रकः-भ्रिका, | अभ्रकः-भ्रिका, | अबिभ्रिषकः-षिका; |
| अभ्रिता-त्री, | अभ्रयिता-त्री, | अबिभ्रिषिता-त्री; |
| अभ्रन्-न्ती, | अभ्रयन्-न्ती, | अबिभ्रिषन्-न्ती; |
| अभ्रिष्यन्-न्ती-ती, | अभ्रयिष्यन्-न्ती-ती, | अबिभ्रिषिष्यन्-न्ती-ती; |
| — | अभ्रयमाणः, | अभ्रयिष्यमाणः; |
| अप् - अभ्रौ - अभ्रः; | — | — |
| अ^भ्रितम्-तः-तवान्, | अभ्रितः, | अबिभ्रिषितम्-तः-तवान्; |
| अभ्रः, | पर्यभ्री[1], अभ्रः, | अबिभ्रिषुः, अबिभ्रयिषुः; |
| अभ्रितव्यम्, | अभ्रयितव्यम्, | अबिभ्रिषितव्यम्; |

अभ्रणीयम्, अभ्रणीयम्, अबिभ्रिषणीयम्;

अभ्र्यम्, अभ्रयम्, अबिभ्रिष्यम्;

ईषदभ्रः, दुरभ्रः, स्वभ्रः;

अभ्रयमाणः, अभ्रयमाणः, अबिभ्रिष्यमाणः;

अभ्रः, अभ्रः, अबिभ्रिषः;

अभ्रितुम्, अभ्रयितुम्, अबिभ्रिषितुम्;

अभ्रा, अभ्रणा, अबिभ्रिषा, अबिभ्रयिषा;

अभ्रणम्, अभ्रणम्, अबिभ्रिषणम्;

अभ्रित्वा, अभ्रयित्वा, अबिभ्रिषित्वा;

समभ्र्य, समभ्र्य, समबिभ्रिष्य;

अभ्रम् २, अभ्रित्वा २, } अभ्रम् २, अभ्रयित्वा २, } अबिभ्रिषम् २; अबिभ्रिषित्वा २; }

(32) 'अम गत्यादिषु' (I-भ्वादि: - 465-सक-से-पर.)

'गत्यादावमतीति स्याद् रोगे स्यादामयत्यमेः।' (श्लो 147, पूर्वार्धम्) इति देवः।

[1]अमकः-मिका, आमक[1A]:-मिका, अमिमिषकः-षिका;

अमिता-त्री, आमयिता-त्री, अमिमिषिता-त्री;

अ[A]मन्-न्ती, आमयन्-न्ती, अमिमिषन्-न्ती;

अमिष्यन्-न्ती-ती, आमयिष्यन्-न्ती-ती, अमिमिषिष्यन्-न्ती-ती;

आमयमानः, आमयिष्यमाण.;

[2]आन्-आमौ-आमः;

---

1. 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' (7-3-34) इति वृद्धिनिषेधः।

1 A. अस्य धातोरमन्तत्वेन प्राप्तं मित्वं, 'न कम्यमिचमाम्' (ग. सू. भ्वादौ) इति निषिध्यते। अतः 'मितां ह्रस्वः' (6-4-32) इति ह्रस्वो न।

2. 'अनुनासिकस्य क्विझलोः क्ङिति' (6-4-15) इति दीर्घः। 'मो नो धातोः' (8-2-64) इति नत्वम्।

A 'वनाद्वनं सञ्चुममन् दमन् गृहं व्याघोत्करोऽहम्मतिमीमिताशयः। चान्तामिष-श्छान्तजलः फलावलीं जान्त्वा क्षमज्झेमनमक्रमीद् गुहाम्॥' धा. का. 1-60.

अमितम्[A]-तः-तवान्, }
[1]आन्तम्-न्तः-न्तवान्, } आमितः, अमिमिषितः-तवान्;

अमः, आमः, अमिमिषुः, आमिमयिषुः, अभ्य[2]मी;[B]

अमितव्यम्, आमयितव्यम्, अमिमिषितव्यम्;

अमनीयम्, आमनीयम्, अमिमिषणीयम्;

[3]अम्यम्, आम्यम्, अमिमिष्यम्;

ईषदमः-दुरमः-स्वमः;

अम्यमानः, आम्यमानः, अमिमिष्यमाणः;

अमः, आमः, अमिमिषः;

अमितुम्, आमयितुम्, अमिमिषितुम्;

[4]आन्तिः, आमना, अमिमिषा, आमिमयिषा;

अमनम्, आमनम्, अमिमिषणम्;

अमित्वा, आमयित्वा, अमिमिषित्वा;

समम्य, समाम्य, समिमिष्य;

आमम् २, } आमम् २, } अमिमिषम् २ }
अमित्वा २, } आमयित्वा २, } अमिमिषित्वा २ };

(33) 'अम रोगे' (X-चुरादिः 1721-सक. से. उ.)

'गत्यादावमतीति स्याद् रोगे स्यादामयत्यमेः ।' (श्लो 147 पूर्वार्धम् ।)

इति देवः ।

आमकः-मिका, आमिमयिषकः-षिका;

---

1. 'रुष्यमत्वरसंघुषाऽऽस्वनाम्' (7-2-28) इति निष्ठायामिड्विकल्पः । इडभावपक्षे 'अनुनासिकस्य—' (6-4-15) इति दीर्घः ।

2. 'जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च' (3-2-157) इति तच्छीलादिषु कर्तृषु इनिः ।

3. 'पोरदुपधात्' (3-1-98) इति यत् ।

4. 'तितुत्र—' (7-2-9) इतीण्णिषेधः । 'अनुनासिकस्य—' (6-4-15) इति दीर्घः ।

A 'तेषां निहन्यमानानां संघुष्टैः कर्णभेदिभिः । अभूदभ्यमितत्रास्तमास्वान्ताशेषदिग् जगत् ॥' भ. का. 9-21.

B 'शीले विभयिनं क्षिप्रं अनादरिणमभ्यमी । न्याय्यं परिमवी मद्रि पापमभ्यमिनं कपिम् ॥' भ. का. 7-20.

| | |
|---|---|
| [1]आमयिता-त्री, (A) | आमिमयिषिता-त्री ; |
| [B]आमयन्-न्ती, | आमिमयिषन्-न्ती ; |
| आमयिष्यन्-न्ती-ती, | आमिमयिषिष्यन्-न्ती-ती ; |
| आमयमानः, | आमिमयिषमाणः ; |
| आमयिष्यमाणः, | आमिमयिषिष्यमाणः ; |
| [2]आन्-आमौ-आमः ; | — |
| आमितम्-तः-तवान्, | आमिमयिषितम्-तः-तवान्, |
| आमः, आमयः,[3] | आमिमयिषुः ; |
| आमयितव्यम्, | आमिमयिषितव्यम् ; |
| आमनीयम्, | आमिमयिषणीयम् ; |
| आम्यम्, | आमिमयिष्यम् ; |
| ईषदामः, दुरामः, स्वामः ; | |
| आम्यमानः, | आमिमयिष्यमाणः ; |
| आमः, | आमिमयिषः, |
| आमयितुम्, | आमिमयिषितुम् ; |
| आमना, | आमिमयिषा ; |
| आमनम्, | आमिमयिषणम् ; |
| आमयित्वा, | आमिमयिषित्वा ; |
| समाम्य, | समामिमयिष्य ; |
| आमम् २, } | आमिमयिषम् २ ; } |
| आमयित्वा २, } | आमिमयिषित्वा २ ; } |

1. अमन्तत्वेन मित्त्वं तु न। 'नान्ये मितोऽहेतौ' (ग. सू. चुरादौ) इति निषेधात्। स्वार्थे णिचि परतः ज्ञपादिपञ्चकव्यतिरिक्ताः मितो न भवन्तीति तदर्थः।

2. 'मो नो धातोः' (8-2-64) इति नत्वम्। न चात्र स्थानिवद्भावः—'पूर्वत्रासिद्धे—' (वा. 1-1-58) इति तन्निषेधात्।

3. औणादिकः अयच्। रोगः।

A अस्य धातोश्चुरादिपाठात् शुद्धधातोरेव रूपाणि। अजादित्वात् यङ् न।

B 'द्रागामयन् विचटदस्थिकयाऽथ मुष्ट्या प्रास्फोटयत् तमजितोऽपि स घाटितास्रम्। दिष्ट्यैष हिंसयति देव्यमर्षं युधीति संमोदमर्जयति घोषति नाकिलोके ॥' धा. का. 3-39.

(34) "अय गतौ" (I-भ्वादिः - 474. सक. से. आ.)

| | | |
|---|---|---|
| आयकः-यिका, | आयकः-यिका, | अयियिषकः-षिका ; |
| अयिता-त्री, | आययिता-त्री, | अयियिषिता-त्री ; |
| — | आययन्-न्ती, | आययिष्यन्-न्ती-ती ; |
| प्लायमानः, [1]पलायमानः, अयमानः, | आययमानः, | अयियिषमाणः ; |
| अयिष्यमाणः, | आययिष्यमाणः, | अयियिषिष्यमाणः ; |
| [2]अत्, अतौ, अतः ; | | |
| अयितम्-तः-तवान्, | आयितम्-तः, | अयियिषितम्-तः-तवान् ; |
| अयः, | आयः, | अयियिषुः, आयियिषुः ; |
| अयितव्यम्, | आययितव्यम्, | अयियिषितव्यम् ; |
| अयनीयम्, | आयनीयम्, | अयियिषणीयम् ; |
| आय्यम्, | आय्यम्, | अयियिष्यम् ; |
| ईषदयः, दुरयः, स्वयः ; | | |
| अय्यमानः, | आय्यमानः, | अयियिष्यमाणः ; |
| आयः, | आयः, | अयियिषः ; |
| अयितुम्, | आययितुम्, | अयियिषितुम् ; |
| [3]अतिः, | आयना, | अयियिषा, आयियिषा ; |
| अयनम्, [1]प्लायनम्-दुलयनम्, पलायनम्, | आयनम्, | अयियिषणम् ; |
| शोभनं अन्त[4]रयणं, (देशादन्यत्र) | | अन्तरयनः-देशः, |
| अयित्वा, | आययित्वा, | अयियिषित्वा ; |
| समय्य, | समाय्य, | समयियिष्य ; |
| आयम् २, अयित्वा २, | आयम् २, आययित्वा २, | अयियिषम् २ ; अयियिषित्वा २ ; |

1. 'उपसर्गस्यायतौ' (8-2-19) इति लत्वम्।
2. वलि लोपे रूपम्।
3. वलि लोपः।
4. 'अयनं च' (8-4-25) इति णत्वम्।

(35) " अर्क स्तवने " (X-चुरादिः-1644. सक. सेट्. उभ.)

'तपने' इत्येके ।

| | |
|---|---|
| अर्ककः-र्किका, | अर्चि[1]कयिषकः-षिका ; |
| अर्कयिता-त्री, | अर्चिकयिषिता-त्री ; |
| अर्कयन्-न्ती, | अर्चिकयिषन्-न्ती ; |
| अर्कयिष्यन्-न्ती-ती, | अर्चिकयिषिष्यन्-न्ती-ती ; |
| अर्कयमाणः, | अर्चिकयिषमाणः ; |
| अर्कयिष्यमाणः, | अर्चिकयिषिष्यमाणः ; |
| [2]अर्क्-अर्कौ-अर्कः ; | |
| अर्कित[3]:- तम्- तवान्, | अर्चिकयिषितम्-तः-तवान् ; |
| अर्कः, | अर्चिकयिषुः ; |
| अर्कयितव्यम्, | अर्चिकयिषितव्यम् ; |
| अर्कणीयम्, | अर्चिकयिषणीयम् ; |
| अर्क्य[A]म्, | अर्चिकयिष्यम् ; |
| ईषदर्कः, दुरर्कः, स्वर्कः ; | |
| अर्क्यमाणः, | अर्चिकयिष्यमाणः ; |
| अर्कः, | अर्चिकयिषः ; |
| अर्कयितुम्, | अर्चिकयिषितुम् ; |
| अर्कणा[4], | अर्चिकयिषा ; |
| अर्कणम्, | अर्चिकयिषणम् ; |
| अर्कयित्वा, | अर्चिकयिषित्वा ; |
| समर्क्य, | समर्चिकयिष्य ; |
| अर्कम् २, } | अर्चिकयिषम् २ ; } |
| अर्कयित्वा २, } | अर्चिकयिषित्वा २ ; } |

1. 'न न्द्राः संयोगादयः' (6-1-3) इति रेफस्य द्वित्वनिषेधः ।
2. 'रात्सस्य' (8-2-24) इति नियमात् ककारस्य संयोगान्तलोपो न ।
3. 'निष्ठायां सेटि' (6-4-52) इति णेर्लोपः ।
4. 'ण्यासश्रन्थो युच्' (3-3-107) इति युच् ।

A. 'सौधे विटङ्कजुषि पश्यति धूसितोऽयं राजाविकीटवलचूर्णनयातिपूज्यः । अफर्घेण तेन समरेष्वविशोठितस्त्वं संशुण्ठिताहितमदेन विजोडितोऽसि॥' धा का. 3-27.

5

(36) "अर्च पूजायाम्" (I-भ्वादि:-204-सक. से. पर.)

'पूजायां णौ विभाषाऽर्चेरर्चयत्यर्चतेऽर्चति । भूवादौ पाठसामर्थ्यात् कर्तृगामिफलेऽर्चति ॥' (श्लो-49.) इति देवः ।

| | | |
|---|---|---|
| अर्चकः-र्चिका, | अर्चकः-र्चिका, | [1]अर्चिचिषकः-षिका ; |
| अर्चिता-त्री, | अर्चयिता-त्री, | अर्चिचिषिता-त्री ; |
| अर्चन्-न्ती, | अर्चयन्-न्ती, | अर्चिचिषन्-न्ती ; |
| अर्चिष्यन्-न्ती-ती, | अर्चयिष्यन्-न्ती-ती, | अर्चिचिषिष्यन्-न्ती-ती ; |
| — | अर्चयमानः, | अर्चयिष्यमाणः ; |
| अ[1A]र्क्-अर्चौ-अर्चः; | — | — |
| अर्चितम्-[A]तः-[2]तवान्, अर्चितः, | | अर्चिचिषितम्-तः-तवान् ; |
| अर्चः, | अर्चः, | अर्चिचिषुः, अर्चिचयिषुः ; |
| अर्चितव्यम्, | अर्चयितव्यम्, | अर्चिचिषितव्यम् ; |
| अर्चनीयम्, | अर्चनीयम्, | अर्चिचिषणीयम् ; |
| [3]अर्च्यम्[B], | अर्च्यम्, | अर्चिचिष्यम् ; |
| ईषदर्चः-दुरर्चः-स्वर्चः ; | — | — |
| अर्च्यमानः, | अर्च्यमानः, | अर्चिचिष्यमाणः ; |
| अर्चः, | अर्चः, | अर्चिचिषः ; |
| अर्चितुम्, | अर्चयितुम्, | अर्चिचिषितुम् ; |
| अर्चा, | अर्चना, | अर्चिचिषा, अर्चिचयिषा ; |
| अर्चनम्, | अर्चनम्, | अर्चिचिषणम् ; |
| अर्चित्वा, | अर्चयि[B]त्वा, | अर्चिचिषित्वा ; |

| | | |
|---|---|---|
| समर्च्य, | समर्च्य, | समर्चिचिष्य ; |
| अर्चम् २, | अर्चम् २, | अर्चिचिषम् २ ; |
| अर्चित्वा २, | अर्चयित्वा २, | अर्चिचिषित्वा २ ; |

[1]अक्र्कः ;

(37) 'अर्च पूजायाम्' (X-चुरादिः-1809. से. उ. ^Aआधृषीयः।)

'पूजायां णौ विभाषाऽर्चेरर्चयत्यर्चतेऽर्चति। मृषादौ पाठसामर्थ्यात् कर्तृगामिफलेऽर्चति ॥' (श्लो.49.) इति देवः।

अर्चकः-र्चिका इत्यादिकानां ण्यन्ताण्यन्तसाधारण्येन लिखितत्वात् पूर्वोक्त (36) पूजार्थकार्चतिवद्रूपाणि ज्ञेयानि। ण्यन्तात् सनि तु

| | |
|---|---|
| अर्चिचयिषकः-षिका, | अर्चिचयिष्यम् ; |
| अर्चिचयिषिता-त्री, | अर्चिचयिष्यमाणः ; |
| अर्चिचयिषन्-न्ती, | अर्चिचयिषः ; |
| अर्चिचयिषिष्यन्-न्ती-ती, | अर्चिचयिषितुम् ; |
| अर्चिचयिषमाणः, | अर्चिचयिषा ; |
| अर्चिचयिषिष्यमाणः, | अर्चिचयिषणम् ; |
| अर्चिचयिषितम्-तः-तवान्, | अर्चिचयिषित्वा, समर्चिचयिष्य; |
| अर्चिचयिषुः, | अर्चिचयिषम् २, |
| अर्चिचयिषितव्यम् ; | अर्चिचयिषित्वा २, |
| अर्चिचयिषणीयम् ; | |

इमानि रूपाणि—इति विशेषः।

A. 'आधृषाद्वा' (ग. सू.) इति णिचो वैकल्पिकत्वम्। 'शेषात् कर्तरि परस्मैपदम्' (1-3-78) इति णिजभावपक्षे परस्मैपदी। शाकटायनस्तु अनुदात्तेत्त्वमस्य धातोरङ्गीकृत्यात्मनेपदित्वं मेने। तत्पक्षे शानचि 'अर्चमानः' इति रूपम्।

## (41) 'अर्द गतौ याचने च' (I-भ्वादिः- 55-सक. से. पर.)

'अर्दयेदर्दतेऽर्देर्थौ हिंसनेऽर्दति याचने।' (103) इति देवः। शाकटायनस्तु अनुदात्तेतमिमं धातुं मन्यते।

'यातने च इत्येके' -इति क्षीरस्वामी। याचने द्विकर्मकः।

| | | |
|---|---|---|
| अर्दकः-र्दिका, | अर्दकः-र्दिका, | अर्दिदिष[1]कः-षिका; |
| अर्दिता-त्री, | अर्दयिता-त्री, | अर्दिदिषिता-त्री; |
| अर्दन्-न्ती, | अर्दयन्-न्ती, | अर्दिदिषन्-न्ती; |
| अर्दिष्यन्-न्ती-ती, | अर्दयिष्यन्-न्ती-ती, | अर्दिदिषिष्यन्-ती-न्ती; |
| — | अर्दयमानः, | अर्दयिष्यमाणः; |
| अर्त्-अर्द्-अर्दौ-अर्दः; | — | — |
| समर्ण[1A]ः, न्यर्णः, | व्य[B]र्णः, अभ्य[B]र्णः-अभ्यर्दितः (विदूरे) | |
| [A]अर्दितम्-तः-तवान्, | अर्दितः, | अर्दिदिषितम्-तः-तवान्; |
| अर्दः, जना[3]र्दनः, | अर्दः, अर्दिदिषुः, | अर्दिदयिषुः; |
| अर्दितव्यम्, | अर्दयितव्यम्, | अर्दिदिषितव्यम्; |
| अर्दनीयम्, | अर्दनीयम्, | अर्दिदिषणीयम्; |
| अर्द्यम्, | अर्द्यम्, | अर्दिदिष्यम्; |
| ईषदर्दः-दुरर्दः-स्वर्दः; | — | — |
| अर्द्यमानः, | अर्द्यमानः, | अर्दिदिष्यमाणः; |
| अर्दः, | अर्दः, | अर्दिदिषः; |
| अर्दितुम्; | अर्दयितुम्, | अर्दिदिषितुम्; |

---

1. 'न न्द्राः संयोगादयः' (6-1-3.) इति रेफस्य द्वित्वनिषेधः।

1.A. 'अर्देस्संनिविभ्यः' (7-2-24) इति इण्निषेधः। 'रदाभ्यां निष्ठातो नः—' (8-2-42) इति नत्वे, णत्वे च रूपम्।

2. 'अभेश्चाविदूर्ये' (7-2-25) इति इण्निषेधः।

3. 'नन्दिग्रहिपचादिभ्यो—' (3-1-134) इति नन्द्यादित्वात् कर्तरि ल्युः।

A. 'पलाय्यनार्दानि रदन् मदद्युगं दधत्ययाप्यानि रदन् मनो मनः। नदन् मदार्दित-शोऽधुना एणं राशो नर्दन् गर्दभस्वनैः' धा. का. 1-8.

B. 'समर्णो गिरिकूटाभान् अभ्यर्णानार्दिदद् द्रुतम्। इतशत्रून् महारम्भान् अदान्तानिश्वसैरपि॥' (भ. का. 9-19.)

| | | |
|---|---|---|
| अर्दा, | अर्दना, | अर्दिदिषा, अर्दिदयिषा ; |
| अर्दित्वा, | अर्दयित्वा, | अर्दिदिषित्वा ; |
| समर्द्य, | समर्द्य, | समर्दिदिष्य ; |
| अर्दम् २, | अर्दम् २, | अर्दिदिषम् २ ; |
| अर्दित्वा २, | अर्दयित्वा २, | अर्दिदिषित्वा २; |

(41 A) 'अर्द हिंसायाम्' (X - चुरादिः - 1829. सक. सेट्. उभ.)

आधृषीयः । 'अर्दयेदर्दतेऽर्देद्यो हिंसनेऽर्दति याचने' (103) इति देवः।
शाकटायनपक्षे आत्मनेपदी ।

| | | |
|---|---|---|
| अर्दकः-र्दिका, | अर्दिदयिषकः-षिका, | अर्दकः-र्दिका ;[1] |
| अर्दयिता-त्री, | अर्दिदयिषिता-त्री, | अर्दिता-त्री ; |
| अर्दयन्-न्ती, | अर्दिदयिषन्-न्ती, | अर्दन्-न्ती ; |
| अर्दयिष्यन्-न्ती-ती, | अर्दिदयिषिष्यन्-न्ती-ती, | अर्दिष्यन्-न्ती-ती ; |
| अर्दयमानः, | अर्दिदयिषमाणः, | [2]अर्दमानः ; |
| अर्दयिष्यमाणः, | अर्दिदयिषिष्यमाणः, | अर्दिष्यमाणः ; |
| अर्त्[2A]-अर्द्-अर्दौ-अर्दः ; | — | — |

अर्दितम्-तः, अर्दिदयिषितः, [3]समर्णः-न्यर्णः-व्यर्णः- [4]अभ्यर्णः, अभ्यर्दितः ;
सवान् ;

अर्दः, अर्दिदयिषुः, अर्दः, [5]जनार्दनः, अर्दिदिषुः, [6]समर्दी ;

| | | |
|---|---|---|
| अर्दयितव्यम् , | अर्दिदयिषितव्यम् , | अर्दितव्यम् ; |
| अर्दनीयम् , | अर्दिदयिषणीयम् , | अर्दनीयम् ; |

---

1. णिजभावपक्षे शुद्धाद्धातोरस्मिन् रूपाणि पूर्वलिखिता (41) दर्दतिवत् ज्ञेयानि ।
2. शाकटायनमते णिजभावपक्षेऽनुदात्तेत्त्वात् शानज् भवति ।
2.A. 'वाऽवसाने' (8-4-56) इति चर्त्वविकल्पः । 'रात् सस्य' (8-2-24) इति नियमात् संयोगान्तलोपो न ।
3. णिजभावपक्षे 'अर्देस्संनिविभ्यः' (7-2-24) इतीण्णिषेधे, 'रदाभ्यां—' (8-2-42) इति निष्ठानत्वे णत्वम् ।
4. 'अभेश्चाविदूर्ये' (7-2-25) इति निष्ठायामिण्णिषेधः । विदूरे तु 'अभ्यर्दित' इत्येव ।
5. णिजभावपक्षे नन्द्यादित्वात् (3-1-134) कर्तरि ल्युः ।
6. 'सुप्यजातौ—' (3-2-78) इति णिनिः ताच्छील्ये ।

(38) 'अर्ज अर्जने' (I-भ्वादि:-224-सक. सेट्. पर.)

पूजार्थक-भौवादिकार्चति (36) वद्रूपाणि सर्वाण्यस्य ज्ञेयानि ।

(39) 'अर्ज प्रतियत्ने' (X-चुरादि:-1726-सक. से. उभ.)

'प्रतियत्नेऽर्जयेदर्जेरर्जतीत्यर्जने पदम्' इति (63) देवः । प्रतियत्नः = गुणाधानमिति कौमुदी ।

| | |
|---|---|
| अर्जकः-र्जिका, | अर्जिजयिषकः-षिका ; |
| अर्जयिता-त्री, | अर्जिजयिषिता-त्री ; |
| अर्जयन्-न्ती, | अर्जिजयिषन्-न्ती, |
| अर्जयिष्यन्-न्ती-ती, | अर्जिजयिषिष्यन्-न्ती-ती ; |
| अर्जयमानः, | अर्जिजयिषमाणः ; |
| अर्जयिष्यमाणः, | अर्जिजयिषिष्यमाणः ; |
| अर्जितम्, तः, | अर्जिजयिषितम्-तः-तवान् ; |
| अर्जः, | अर्जिजयिषुः ; |
| अर्जयितव्यम्, | अर्जिजयिषितव्यम् ; |
| अर्जनीयम्, | अर्जिजयिषणीयम् ; |
| अर्ज्यम्, | अर्जिजयिष्यम् ; |
| ईषदर्जः-दुरर्जः-स्वर्जः ; | |
| अर्ज्यमानः, | अर्जिजयिष्यमाणः ; |
| अर्जः, | अर्जिजयिषः ; |
| अर्जयितुम्, | अर्जिजयिषितुम् ; |
| अर्जना, | अर्जिजयिषा ; |
| अर्जनम्, | अर्जिजयिषणम् ; |
| अर्जयित्वा, | अर्जिजयिषित्वा ; |
| समर्ज्य, | समर्जिजयिष्य ; |
| अर्जम् २ , } | अर्जिजिषम् २ ; } |
| अर्जयित्वा २, } | अर्जिजयिषित्वा २; } |
| [1] अर्जुनः ; | |

---

1. औणादिकः उनन् प्रत्ययो णिलुक् च । वृक्षः पार्थश्च ।

(40) 'अर्थ उपयाच्ञायाम्' (X-चुरादिः-1905-सक. सेट्-आत्मने-आ[1]गर्वीयः । अदन्तः)

| | |
|---|---|
| अर्थकः-र्थिका, | अर्तिथयिषकः-षिका ; |
| अर्थयिता-त्री, | अर्तिथयिषिता-त्री ; |
| अर्थ[1]यमानः, | अर्तिथयिषमाणः ; |
| अर्थयिष्यमाणः, | अर्तिथयिषिष्यमाणः ; |
| अर्थ्[2]-अर्थौ-अर्थः ; | — |
| अर्थितम्[A]-तः-तवान्, | अर्तिथयिषितम्-तः-तवान् ; |
| अर्थः, विद्या[3]र्थी, | अर्तिथयिषुः ; |
| अर्थयितव्यम्, | अर्तिथयिषितव्यम् ; |
| अर्थनीयम्, | अर्तिथयिषणीयम् ; |
| अर्थ्यम्, | अर्तिथयिष्यम्, |
| ईषदर्थः, दुरर्थः, स्वर्थः ; | — |
| अर्थ्यमानः, | अर्तिथयिष्यमाणः ; |
| अर्थः ; | अर्तिथयिषः ; |
| अर्थयितुम्, | अर्तिथयिषितुम् ; |
| अर्थना, अभ्यर्थना, | अर्तिथयिषा ; |
| अर्थनम्, | अर्तिथयिषणम् ; |
| अर्थयित्वा, | अर्तिथयिषित्वा ; |
| समर्थ्य, अभ्यर्थ्य,[B] | समर्तिथयिष्य ; |
| अर्थम् २, अर्थयित्वा २, | अर्तिथयिषम् २, अर्तिथयिषित्वा २ ; |

1. 'आगर्वादात्मनेपदिनः', इति ग. सू. चुरादौ । तेन ण्यन्तात्तङेव । "प्रार्थयन्ति शयनोत्थितं प्रियाः" 'इत्यादि तु कृदन्तात् 'तत्करोति—' इति णिचि नेयम्' इति मा धा. वृत्तौ ॥
2. 'रात् सस्य' (8-2-24) इति नियमात् संयोगान्तलोपो न ।
3. 'सुप्यजातौ णिनिस्ताच्छील्ये' (3-2-78) इति णिनिः ।

A. 'तच्चाकर्ण्य सरोषमुत्पतदयते स्मोत्तुङ्गमञ्चं हरिः
प्रोत्तिष्ठन्नसिचर्मणी गृहितवान् कंसोऽपि मृत्योऽसताम् ।
द्रष्टॄणां कुहकोऽथ शूरयितृभिः स्तुत्योऽसिना वीरयां-
चक्रे स्थूलिनमोतिरर्थितवधास्सत्राशनैर्गर्वितः' (धा. का. 3-58.)

B. 'न जिह्रियाञ्चकाराथ सीतामभ्यर्थ्य तर्जितः ।
नाप्यूर्जां विमदाञ्चक्रे वैदेह्यां प्रथितो भृशम् ॥" भ. का. 6-3.

| | | |
|---|---|---|
| [A]अर्द्यम्, | अर्दिदयिष्यम्, | अर्द्यम्; |
| ईषदर्दः, दुरर्दः, स्वर्दः; | | |
| अर्द्यमानः, | अर्दिदयिष्यमाणः, | अर्द्यमानः; |
| अर्दः, | अर्दिदयिषः, | अर्दः; |
| अर्दयितुम्, | अर्दिदयिषितुम्, | अर्दितुम्; |
| अर्दना, | अर्दिदयिषा, | अर्दा; |
| अर्दयित्वा, | अर्दिदयिषित्वा, | अर्दित्वा; |
| समर्द्य, | समर्दिदयिष्य, | समर्द्य; |
| अर्दम् २, अर्दयित्वा २, | अर्दिदयिषम् २, अर्दिदयिषित्वा २, | अर्दम् २ अर्दित्वा २; |

## (42) 'अर्व गतौ' (I-भ्वादिः 415-सक. से. पर.)

| | | |
|---|---|---|
| अर्वकः-र्विका, | अर्वकः-र्विका, | [1]अर्विविषकः-षिका; |
| अर्विता-त्री, | अर्वयिता-त्री, | अर्विविषिता-त्री; |
| [B]अर्वन्-न्ती, | अर्वयन्-न्ती, | अर्विविषन्-न्ती; |
| अर्विष्यन्-न्ती-ती, | अर्वयिष्यन् न्ती-ती, | अर्विविषिष्यन्-न्ती-ती; |
| — | अर्व्यमाणः, | अर्वयिष्यमाणः; |
| अर्प् - अर्पु - अर्वौ - अर्वः; | | |
| अर्वितम् - तः-तवान्, अर्वितः | | अर्विविषितम्-तः-तवान्; |
| अर्वः, | अर्वः, | अर्विविषुः, अर्विवयिषुः; |
| अर्वितव्यम्, | अर्वयितव्यम्, | अर्विविषितव्यम्; |
| अर्वणीयम्, | अर्वणीयम्, | अर्विविषणीयम्; |
| अर्व्यम्, | अर्व्यम्, | अर्विविष्यम्; |
| ईषदर्वः-दुरर्वः-स्वर्वः; | — | — |

---

1. 'न न्द्राः—' (6-1-3) इति रेफस्य द्वित्वनिषेधः ।

A. 'कृष्णोऽविधयिताऽरिभीरभिमथन् दोष्णा प्रथन् भ्रामयन्
कार्ष्ण्यं प्रोथितवान् अशोकितमति भूमावचीकॢप्तमुम् ।
मल्लोऽर्द्यः स च द्विषितः पदमुरासास्मीद्दरैः शुन्धितः
तावत् स्वं बलमर्दं क्षुपितवान् कुष्टपा हली मुष्टिकम् ॥' धा. का. 3-50

B. 'हर्यैस्तुरङ्गैर्द्रुतमर्वतो रवेः पर्वद्भिरालम्ब्य रक्तिमा करैः ।
प्रवर्ण्य शैलाग्रमर्व्यं पद्मिनी प्रकर्ण्य वाताः धनशोभितैरिव ॥ धा. का. 1-54.'

| | | |
|---|---|---|
| अर्व्यमाणः, | अर्व्यमाणः, | अर्विविष्यमाणः ; |
| अर्वः, | अर्वः, | अर्विविषः ; |
| अर्वितुम्, | अर्वयितुम्, | अर्विविषितुम् ; |
| [1]अर्वा, | अर्वणा, | अर्विविषा, अर्विवयिषा; |
| अर्वणम्, | अर्वणम्, | अर्विविषणम् ; |
| अर्वित्वा, | अर्वयित्वा, | अर्विविषित्वा ; |
| समर्व्य, | समर्व्य, | समर्विविष्य ; |
| अर्वम् २, | अर्वम् २, | अर्विविषम् २ ; |
| अर्वित्वा २, | अर्वयित्वा २, | अर्विविषित्वा २. |

(43) " अर्व हिंसायाम् " (I-भ्वादिः-584. सक. सेट्. पर.)

अर्वक^ :-र्विका, अर्विविषकः- षिका,

इत्यादिकानि (42) अर्वतिवद्रूपाणि सर्वाणि ज्ञेयानि ।

^' अकर्विताकाङ्क्षितमर्वकं सतां मांसादिसर्वकदुष्टभर्वकम् ।
कर्वद्वृकेलिरसेन खर्वितं गर्वार्वकं शर्वपरेण सर्वताम् ॥' धा. का. 1-74

(44) " अर्ह पूजायाम् " (I-भ्वादिः-740-सक. से. पर.)

' —पूजनेऽर्हति चार्हयेत् । ' (197) इति देवः ।

| | | |
|---|---|---|
| अर्हकः-र्हिका, | अर्हकः-र्हिका, | [2]अर्जिहिषकः-षिका ; |
| अर्हिता-त्री, | अर्हयिता-त्री, | अर्जिहिषिता-त्री ; |
| अर्हन्-न्ती, | अर्हयन्-न्ती, | अर्जिहिषन्-न्ती ; |
| अर्हिष्यन्-न्ती-ती, | अर्हयिष्यन्-न्ती-ती, | अर्जिहिषिष्यन्-न्ती-ती; |
| — | अर्हयमाणः, | अर्हयिष्यमाणः ; |
| [3]अर्ट्-अर्ड्-अर्हौ-अर्हः ; | — | — |
| अर्हः, पूजा[4]र्हः-पूजार्हा, अर्हः, | अर्जिहिषुः, अर्जिहयिषुः, | [5]अर्हन् ; |

1. ' गुरोश्च हलः ' (3-3-103) इति स्त्रियां अकारप्रत्ययः भावादौ ।
2. ' न न्द्राः—' (6-1-3) इति रेफस्य द्वित्वनिषेधे ' कुहोश्चुः ' (7-4-62) इति चुत्वम् ।
3. ' हो ढः ' (8-2-31) इति ढत्वम् ।
4. ' अर्हः ' (3-2 12) इत्यच् कर्मण्युपपदे । अदन्तत्वात् टाप् ।
5. ' अर्हः प्रशंसायाम् ' (3-2-133) इति प्रशंसायां शता । प्रशंसाया अन्यत्र ' वध-मर्हति चोरः ' इति लडेव ।

| | | |
|---|---|---|
| अर्हितव्यम्, | अर्हयितव्यम्; | अर्जिहिषितव्यम्; |
| [A]अर्हणीयम्, | अर्हणीयम्, | अर्जिहिषणीयम्; |
| अर्ह्यम्, | अर्ह्यम्, | अर्जिहिष्यम्; |
| ईषदर्हः, दुरर्हः, स्वर्हः; | | — |
| अर्ह्यमाणः, | अर्ह्यमाणः, | अर्जिहिष्यमाणः; |
| अर्हः, [1]अर्घः, | अर्हः, | अर्जिहिषः; |
| अर्हितुम्, | अर्हयितुम्, | अर्जिहिषितुम्; |
| अर्हा, | अर्हणा, | अर्जिहिषा, अर्जिहयिषा; |
| अर्हणम्, | अर्हणम्, | अर्जिहिषणम्; |
| अर्हित्वा, | अर्हयित्वा, | अर्जिहिषित्वा; |
| समर्ह्य, | समर्ह्य, | समर्जिहिष्य; |
| अर्हम् २, अर्हित्वा २, | अर्हम् २, अर्हयित्वा २, | अर्जिहिषम् २; अर्जिहिषित्वा २. |

.(45) "अर्ह पूजायाम्" (X-चुरादिः-1732-सक. सेट्. उभ.)

'—पूजनेऽर्हति चार्हयेत।' (197) इति देवः।

पूर्वोक्तमौवादिकार्हतिवत् (44) रूपाणि सर्वाणि ज्ञेयानि। ण्यन्तात् सनि तु इमानि रूपाणि—

| | |
|---|---|
| अर्जिहयिषकः-षिका; | अर्जिहयिषितव्यम्; |
| अर्जिहयिषिता-त्री; | अर्जिहयिषणीयम्; |
| अर्जिहयिषन्-न्ती; | अर्जिहयिष्यम्; |
| अर्जिहयिषिष्यन्-न्ती-ती; | ईषदर्जिहयिषः-दुरर्जिहयिषः-स्वर्जिहयिषः; |
| अर्जिहयिषमाणः; | अर्जिहयिष्यमाणः; |
| अर्जिहयिषिष्यमाणः; | अर्जिहयिषः; |
| अर्जिहयिषितम्-तः-तवान्; | अर्जिहयिषितुम्; |
| अर्जिहयिषुः; | अर्जिहयिषा; |

1. 'न्यङ्क्वादीनां च' (7-3-53) इति कुत्वम्। 'मूल्ये पूजाविधावर्घः—' इत्यमरः
A. 'गोविन्दस्तुहिनांशुरम्यवदनः कंसं जगद्द्रोहिणं प्रोद्दिष्यन्नगदर्हणीयमहिमा मोदेन निन्ये निशाम्' धा. का. 1-92.

| | | |
|---|---|---|
| अर्जिहयिषणम् ; | अर्जिहयिषम् २; | |
| अर्जिहयिषित्वा ; | अर्जिहयिषित्वा २ ; | |
| समर्जिहयिष्य ; | इति ॥ | |

(45A) "अर्ह पूजायाम्" (X-चुरादिः-1831. सक. से. उभ.)

आधृषीयः ।

'—पूजनेऽर्हति चार्हयेत् ।' (197) इति देवः ।)

'आधृषाद्वा' (गणसूत्रं चुरादौ) इति णिचो वैकल्पिकत्वम् । णिजन्तात् पूजार्थक-चौरादिका (45) र्हयतिवत्, णिजभावपक्षे भौवादिकार्हतिवत् (44) ■ रूपाणि ज्ञेयानि । शाकटायनमते णिजभावपक्षे आत्मनेपदी । तदानीं शानचि 'अर्हमाणः' इति रूपम्—इति विशेषः ।

(46) "अल भूषणपर्याप्तिवारणेषु" (I-भ्वादिः-516-सक. से. पर.)

| | | |
|---|---|---|
| आलकः-लिका, | आलकः-लिका, | अलिलिषकः-षिका ; |
| अलिता-त्री, | आलयिता-त्री, | अलिलिषिता-त्री ; |
| अलन्-न्ती, | आलयन्-न्ती, | अलिलिषन् - न्ती ; |
| अलिष्यन्-न्ती-ती, | आलयिष्यन्-न्ती-ती, | अलिलिषिष्यन्-न्ती-ती; |
| [A]अलमानः | आलयमानः, | अलिलिषमाणः; |
| अलिष्यमाणः, | आलयिष्यमाणः, | अलिलिषिष्यमाणः ; |
| अल् - अलौ-अलः ; | — | — |
| अलितः-तं-तवान्, | आलितः-तः, | अलिलिषितः-तवान् ; |
| अलः, आलः, | अलिलिषुः, | आलिलयिषुः ; |
| अलितव्यम्, | आलयितव्यम्, | अलिलिषितव्यम् ; |
| अलनीयम्, | आलनीयम्, | अलिलिषणीयम् ; |
| आल्यम्, | आल्यम्, | अलिलिष्यम् ; |
| ईषदलः-दुरलः-स्वलः ; | — | — |

A. अयं धातुः स्वरितेत्—इत्येके—इति सिद्धान्तकौमुदी । तदानीं शानजपीति विशेषः । मैत्रेयोऽप्येवमेव ।

| | | |
|---|---|---|
| अल्यमानः, | आल्यमानः, | अलिलिप्यमाणः ; |
| आलः, आलः, अलिलिषः, [1]आली-आलिः, | अ[2]लकम्, अ[3]लका ; | |
| अलितुम्, | आलयितुम्, | अलिलिपितुम् ; |
| [4]अलितिः, | आलना, | अलिलिपा, आलिलयिषा ; |
| आलनम्, | आलनम्, | अलिलिषणम् ; |
| अलित्वा, | आलयित्वा, | अलिलिषित्वा ; |
| समल्य, | समाल्य, | समलिलिप्य ; |
| आलम् २, अलित्वा २, | आलम् २, आलयित्वा २, | अलिलिपम् २ ; अलिलिपित्वा २ . |

## (47) "अव रक्षण गति कान्ति प्रीति तृप्ति अवगम प्रवेश श्रवण स्वाम्यर्थ याचन क्रियेच्छा दीप्ति अवाप्ति आलिङ्गन हिंसाऽऽदान भाग वृद्धिषु" (I-भ्वादिः-600 सक. से-पर.)

'अव्=रक्षणे गतौ कान्तौ प्रीतौ तृप्तौ द्युतौ श्रुतौ। प्राप्तौ श्लेषेऽर्थने वेशे भागे वृद्धौ ग्रहे वधे ॥ स्वाम्यर्थेऽवगमे कामे कृतौ—' इति बोपदेवः।

| | | |
|---|---|---|
| आवकः-विका, | आवकः-विका, | अविविषकः-षिका ; |
| अविता-त्री, | आवयिता-त्री, | अविविषिता-त्री ; |
| अवन्[A]-न्ती, | आवयन्-न्ती, | अविविषन्-न्ती ; |
| अविष्यन्-न्ती-ती, | आवयिष्यन्-न्ती-ती, | अविविषिष्यन्-न्ती-ती ; |
| — | आवयमानः, | आवयिष्यमाणः ; |

1. 'इञ् वपादिभ्यः' (पा. 3-3-108) इतीञ्। 'कृदिकारादक्तिनः' (ग. सू. 4-1-45) इति ङीष्।
2. 'क्वुन् शिल्पिसंज्ञयोः' (द. उणा-3-5.) इति क्वुन्।
3. 'क्षिपकादीनां च' (पा. 7-3-44) इति इत्वं न।
4. 'तितुत्रेष्वग्रहादीनां—' (7-2-9. वा) इति पर्युदासात् इट् भवति।

A. तव विदितविषादो दृष्टकृत्स्नाऽऽभिपादः धियमनिशमयन्तं पर्वतं माल्यवन्तम् ॥ भ. का. 10-17.

[1]ऊः-जनौः,[1A] जनावौ-जनावः ; —
अवितः-तम्-तवान्, आवितम्, अविविषितम्-तः-तवान् ;
अवः, आवः, अविविषुः, आविवयिषुः ;
अवितव्यम्, आवयितव्यम्, अविविषितव्यम् ;
अवनीयम्, आवनीयम्, अविविषणीयम् ;
आव्यम्, आव्यम्, अविविष्यम् ;
ईषदवः, दुरवः, स्ववः ; — —
अव्यमानः, आव्यमानः, अविविष्यमाणः ;
आवः, आवः, अविविषः ;
[2]ऊतिः, आवना, अविविषा, आविवयिषा ;
अवितुम्, आवयितुम्, अविविषितुम् ;
अवनम्, आवनम्, अविविषणम् ;
अवित्वा, आवयित्वा, अविविषित्वा ;
समव्य, समाव्य, समविविष्य ;
आवम् २, अवित्वा २, } आवम् २, आवयित्वा २, } अविविषम् २ ; अविविषित्वा २ ; }
[3]ओम्, अवनी-[4]अवनिः, ओतुः[5] (बिडालः).

## (48) "अश भोजने" (IX-क्र्यादिः-1523. सक. से-पर-)

'व्याप्तावश्नुत इत्याहुः, अश्नातीति तु भोजने ।' (166) इति देवः ।
आशकः-आशकः-शिका, अशिशिषकः-षिका, [6]अशाशकः-शिका,
अशिता-त्री, आशयिता-त्री, अशिशिषिता-त्री, अशाशिता-त्री ;

---

1. 'ज्वरत्वर—' (6-4-20) इत्युपधावकारयोरूठ् ।
1A. 'एत्येधत्यूठ्सु' (6-1-89) इति वृद्धिः ।
2. 'ऊतियूति—' (3-3-97) इति क्तिनि उदात्तान्तो निपातितः ।
3. औणादिके मन्प्रत्यये प्रत्ययस्य टिलोपे ऊठभावे ऊठि गुणे च रूपम् ।
4. औणादिकेऽनिप्रत्यये 'कृदिकारात्—' (4-1-45. ग. सू.) इति ङीषि रूपद्वयम् ।
5. औणादिकः तुन् प्रत्ययः, ऊठ् गुणः ।
6. 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः' (वा. 3-1-22) इति यङ् ।

[1]अश्नन्-ती, आ[2]शयन्-न्ती, अशिशिषन्-न्ती ; —
अशिष्यन्-न्ती-ती, आशयिष्यन्-न्ती-ती, अशिशिषिष्यन्-न्ती-ती ;
— अशाश्यमानः, अशाशिष्यमाणः
[3]अट्-अशौ-अशः ; — —
[3A]अशितम्-[A]तः, आशितम्-तः, अशिशिषितम्, अशाशितः-तवान् ;
अशः, आशः, [4]अन्नाशः, कुण्डाशी,[5] नराशी,[B] [C]फलाशी, अशि[D]शिषुः ;
अना[6]श्वान् ;
अशितव्यम्, आशयितव्यम्, अशिशिषितव्यम्, अशाशितव्यम् ;
अश[E]नीयम्, आशनीयम्, अशिशिषणीयम्, अशाशनीयम् ;
आश्यम्, आश्यम्, अशिशिष्यम्, अशाश्यम् ;
ईषदशः-दुरशः-स्वशः ; — —
अश्यमानः, आश्यमानः, अशिशिष्यमाणः, अशाश्यमानः ;
आशः, आशः ; अशिशिषः, अशाशः ;
अशितुम्, आशयितुम्, अशिशिषितुम्, अशाशितुम् ;

---

1. 'क्र्यादिभ्यः–' (3-1-81.) इति श्नाविकरणप्रत्ययः। 'श्नाऽभ्यस्तयोरातः' (6-4-111) इति आलोपः।
2. 'निगरणचलना–' (1-3-87) इति ण्यन्तात् परस्मैपदमेव।
3. 'व्रश्चभ्रस्ज–' (8-2-36) इति षत्वम्। तस्य जश्त्वेन डः।
3. A 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (3-4-76) इति अधिकरणे क्तः।
4. 'कर्मण्यण्' (3-2-1) इत्यण्।
5. 'सुप्यजातौ णिनिः–' (3-2-78) इति णिनिः।
6. 'उपेयिवान्–' (3-2-109) इति नञ्पूर्वकादस्मात् क्वसन्तो निपातितः।

A. 'सदोद्गारसुगन्धीनां फलानामलमाशिताः' भ. का. (7-38) आङ्पूर्वात् 'आदिकर्मणि क्तः'–(3-4-71) इति कर्तरि क्तः।
B. 'परस्त्रीभोगहरणं धर्म एव नराशिनाम्। मुखमस्तीत्यभाषिष्ठाः का मे साशङ्कता त्वयि' भ. का. (9-122)
C. 'फलाशिनो निर्झरकुञ्जभाजः दिव्याङ्गनाऽनङ्गरसानभिज्ञाः। ' भ. का. (12-49)
D. 'लोकानशिशिषोस्तुल्यः कृतान्तस्य विपर्यये। मने चिकरिषोर्वृक्षान् वलं जिगरिषुः कपेः॥' भ. का. (3-54)
E. 'अशनीयमिवाशंसुर्महानायादशोभनः, भ.का. (7-79)

[1]अष्टि:, आशना, अशिशिषा, आशिशयिषा, अशाशा,[2] अशनाया ;[3]
अशनम्, आशनम्, अशिशिषणम्; अशाशनम्;
अशित्वा, आशयित्वा, अशिशिषित्वा, अशाशित्वा;
समश्य, प्राश्य, समशिशिष्य, समशाश्य;
आशम् २, अशित्वा २, } आशम् २, आशयित्वा २, } अशिशिषम् २, अशिशिषित्वा २, } अशाशम् २; अशाशित्वा. }

(49) "अशू व्याप्तौ सङ्घाते च" ( V-स्वादिः-1264-सक-वेट् - आ- )

'व्याप्तावश्नुत इत्याहुरश्नातीति तु भोजने।' इति देवः (166)

आशकः- शिका, आशकः-शिका, [4]अशिशिषकः-षिका, [5]अशाशकः-शिका;
[6]अष्टा-ष्ट्री, अशिता-त्री, आशयिता-त्री, अशिशिषिता-त्री, अशाशिता-त्री;
— आशयन्-न्ती, आशयिष्यन्-न्ती-ती;
[7]अश्नुवानः,[A] आशयमानः, [8]अशिशिषमाणः, अशाश्यमानः;
अशिष्यमाणः, अक्ष्यमाणः } आशयिष्यमाणः, अशिशिषिष्यमाणः, अशाशिष्यमाणः
अट्-अशौ-अशः; — — —
[9]अष्टम् - ष्टः-ष्टवान् [7]आशितम्-तः, अशिशिषितः, अशाशितः-तवान्;
अशः, आशः, अशिशिषुः, आशिशयिषुः, अशाशः[10];

---

1. पत्वम् ष्टुत्वम्। 'तितुत्र-' (7-2-9) इति नेट्।
2. 'अ प्रत्ययात्' (3-3-102) इत्य-प्रत्ययः।
3. अशनमात्मन इच्छतीत्यर्थे क्यचि, 'अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु' (7-4-34) इति निपातनादीत्वाभावः।
स्त्रियां क्यजन्तादकारप्रत्ययः।
4. 'स्मिपूङ्रञ्ज्वशां-' (7-2-74) इति नित्यमिट्।
5. 'सूचिसूत्रि— ' (वा. 3-1-22.) इति यङ्। 'दीर्घोऽकितः' (7-4-83) इत्यभ्यासस्य दीर्घः।
6. 'स्वरतिसूति— ' (7-2-44) इति वा इट्।
7. 'स्वादिभ्यः— ' 3. इति श्नुविकरणप्रत्ययः। 'अचि श्नुधातु— ' (6-4-77) इत्युवङ्।
8. 'पूर्ववत् सनः' (1-3-62) इति शानच्।
9. ऊदित्वात् इड्विकल्पः 'यस्य विभाषा' (7-2-15) इति इण्णिषेधः।
10. पचाद्यच् (3-1-134.) 'यङोऽचि च' (2-4-74.) इति यङो लुक्।
A. "शक्तयृष्टिपरिघप्रासगदामुद्गरपाणयः। व्यश्नुवाना दिशः प्रापुः वनं दृष्टिविषोपमाः" भ. का. (9.4.)

| | | | |
|---|---|---|---|
| अशितव्यम्, अष्टव्यम्, | आशयितव्यम्, | अशिशिषितव्यम्, | अशाशितव्यम्; |
| अशनीयम्, | आशनीयम्, | अशिशिषणीयम्, | अशाशनीयम्; |
| आश्यम्, | आश्यम्, | अशिशिष्यम्, | अशाश्यम्; |
| ईषदशः-दुरशः-स्वशः, | | — | — |
| अश्यमानः, | आश्यमानः, | अशिशिष्यमाणः, | अशाश्यमानः; |
| आशः, | आशः, | अशिशिषः, | अशाशः; |
| अशितुम्, अष्टुम्, | आशयितुम्, | अशिशिषितुम्, | अशाशितुम्; |
| अष्टिः, | आशना, | अशिशिषा, आशिशयिषा, | अशाशा[1]; |
| अशनम्, | आशनम्, | अशिशिषणम्, | अशाशनम्; |
| अशित्वा, अष्ट्वा, | आशयित्वा, | अशिशिषित्वा, | अशाशित्वा; |
| समश्य, | प्राश्य, | प्राशिशिष्य, | समशाश्य, |
| आशम् २, अशित्वा २, अष्ट्वा २, | आशम् २, आशयित्वा २, | अशिशिषम् २, अशिशिषित्वा २, | अशाशम् २, अशाशित्वा २, |

[2]अश्वः, [3]अशनिः, [4]अश्मा, [5]अक्षः, [6]अक्षरम्, —इमे औणादिकाः।

## (50) "अप गतिदीप्त्यादानेषु"

(I-भ्वादिः-886-सक-सेट्-उभयपदी)

उत्तरत्र विलेख्यमानस्य अस (51) धातोः पाठभेदोऽयम्-तद्वत् सर्वाणि रूपाणि बोध्यानि।

---

1. 'अ प्रत्ययात्' (3-3-102)। इति सन्नन्तात् अकारप्रत्ययः।
2. क्वन्प्रत्ययः (द. उ. 8-123)।
3. अनिप्रत्ययः (द. उ. 1-1.)।
4. मनिन् (द. उ. 6-75) प्रत्ययः।
5. सः प्रत्ययः (द. उ. 9. 21.)।
6. 'अशेः सरन्' (द. उ. 8. 60) इति सरन्प्रत्ययः।

# (51) "अस गतिदीप्त्यादानेषु"

( I-भ्वादिः-886-सक-सेट् - उभयपदी )

'असतेऽसति गत्यादौ, भुव्यस्ति, क्षेपणेऽस्यति।' ( 184 श्लोकः।) इति देवः।

| | | |
|---|---|---|
| आसकः-सिका, | आसकः-सिका, | [1]असिसिषकः-षिका ; |
| असिता-त्री, | आसयिता-त्री, | असिसिषिता-त्री ; |
| असन्-न्ती, | आसयन्-न्ती, | असिसिषन्-न्ती ; |
| असिष्यन्-न्ती-ती, | आसयिष्यन्-न्ती-ती, | असिसिषिष्यन्-न्ती-ती ; |
| असमानः, | आसयमानः, | असिसिषमाणः ; |
| असिष्यमाणः, | आसयिष्यमाणः, | असिसिषिष्यमाणः ; |
| [2]अः, असौ, असः ; | — | — |
| असितम्-तः, | आसितम्-तः, | असिसिषितः-तवान् ; |
| असः, | आसः, | असिसिषुः, आसिसयिषुः ; |
| असितव्यम्, | आसयितव्यम्, | असिसिषितव्यम् ; |
| असनीयम्, | आसनीयम्, | असिसिषणीयम् ; |
| आस्यम्, | आस्यम्, | असिसिष्यम् ; |
| ईषदसः, दुरसः, स्वसः, | — | — |
| आसः, | आसः, | असिसिषः ; |
| असितुम्, | आसयितुम्, | असिसिषितुम् ; |
| अस्तिः, | आसना, | असिसिषा, आसिसयिषा ; |
| असनम्, | आसनम्, | असिसिषणम् ; |
| असित्वा, | आसयित्वा, | असिसिषित्वा ; |
| प्रास्य, | समास्य, | प्रासिसिष्य ; |
| आसम् २, } | आसम् २, } | असिसिषम् २ ; } |
| असित्वा २, } | आसयित्वा २, } | असिसिषित्वा २. } |

---

1. 'सन्यङोः' (6-1-9) इति द्वित्वम्।
2. क्विपि, 'ससजुषो रुः' (8-2-66) इति रुत्वम्। 'खरवसानयोर्विसर्जनीयः' (8-3-15) इति विसर्गः।

(52) "अस भुवि" (II-अदादिः-1065-अक. सेट्. पर.)

'असतेऽसति गत्यादौ' भुव्यस्ति, क्षेपणेऽस्यति' (184) इति देवः ।

[1]भावकः-विका, भावकः-विका, [1A]बुभूषकः-षिका, [2]बिभावयिषकः-षिका, [2A]बोभूयकः-यिका ;

भविता, भावयिता, बुभूषिता, बिभावयिषिता-बोभूयिता-त्री;

[3]सन्-सती, भावयन्, बुभूषन्, बिभावयिषन्-न्ती ;

भविष्यन्, भावयिष्यन्, बुभूषिष्यन्, बिभावयिषिष्यन्-न्ती-ती;

[3A]व्यतियाणः, भावयमानः, भावयिष्यमाणः, बोभूयमानः, बोभूयिष्यमाणः ;

भूः-भुवौ-भुवः ; — — —

[4]भूतः-तम्-तवान्, भावितः, बुभूषितः, बिभावयिषितः-बोभूयितः-तवान् ;

भवः, भावः, बुभूषुः, बिभावयिषुः, बोभूयः ;

भवितव्यम्, भावयितव्यम्, बुभूषितव्यम्, बिभावयिषितव्यम्, बोभूयितव्यम् ;

भवनीयम्, [5]प्रभवनीयम्, } प्र[6]भावनीयम्, बुभूषणीयम्, बिभावयिषणीयम्, बोभूयनीयम् ;

[6A]भव्यम्, अवश्य[7]भाव्यम्, भाव्यम्, बुभूष्यम्, बिभावयिष्यम्, बोभूय्यम् ;

ईषद्भवम्, दुर्भवम्, सुभवम् ; — —

भूयमानः, भाव्यमानः, बुभूष्यमाणः, बिभावयिष्यमाणः, बोभूय्यमानः ;

---

1. 'अस्तेर्भूः' (2-4-52) इति आर्धधातुकविषये 'भू' आदेशः ।

1. A 'सनि ग्रहगुहोश्च' (7-2-12) इति इण्निषेधः । 'इको झल्' (1-2-9) इति सनः कित्वम् ।

2. 'ओः पुयण्ज्यपरे' (7-4-80) इति अभ्यासोकारस्येत्वम् ।

2. A आर्धधातुकविषयायां भूभावः । अतश्च हलादित्वात् यङ्प्रत्यय उत्पद्यते—यथा अजघातो । 'गुणो यङ्लुकोः' (7-4-82) इत्यभ्यासे गुणः ।

3. 'श्नसोरल्लोपः' (6-4-111) इति धात्वकारस्य लोपः । शतुः सार्वधातुकत्वात् भूभावो न ।

3.A 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच् । 'श्नसोरल्लोपः' (6-4-111) इति धात्वकारलोपः । 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' (8-3-87) इति षत्वम् ।

4. 'श्र्युकः किति' (7-2-11) इतीण्निषेधः ।

5. 'न भाभू–' (8-4-34) इति णत्वं न ।

6. 'ण्यन्तभादीनां–' (वा 8-4-34) इति णत्वं न ।

6. A 'अचो यत्' (3-1-97) इति यत् ।

7. 'ओरावश्यके' (3-1-125) इति ण्यत् ।

| | | | |
|---|---|---|---|
| [1]भवः / भावः } [2]भावः, | | बुभूषः ; | बिभावयिषः, बोभूयः ; |
| भवितुम्, | भावयितुम्, | बुभूषितुम्, | बिभावयिषितुम्, बोभूयितुम् ; |
| भूतिः, | भावना, | बुभूषा, | बिभावयिषा, बोभूया ; |
| भवनम्, | भावनम्, | बुभूषणम्, | बिभावयिषणम्, बोभूयनम् ; |
| भूत्वा, | भावयित्वा, | बुभूषित्वा, | बिभावयिषित्वा, बोभूयित्वा ; |
| अनुभूय, | अनुभाव्य, | अनुबुभूष्य, | अनुबिभावयिष्य, अनुबोभूय्य ; |
| भावम् २, / भूत्वा २, | भावम् २, / भावयित्वा २, | बुभूषम् २, / बुभूषित्वा २, | बिभावयिषम् २ ; / बिभावयिषित्वा २; / बोभूयम् २; / बोभूयित्वा २. |

## (53) " असु क्षेपणे " (IV-दिवादिः-1209. सक. से. पर.)

'असतेऽसति गत्यादौ, अुत्यस्ति, क्षेपणेऽस्यति ।' (184) इति देवः ।

| | | |
|---|---|---|
| आसकः-सिका, | आसकः-सिका, | असिसिषकः-षिका ; |
| असिता-त्री, | आसयिता-त्री, | असिसिषिता-त्री ; |
| [3]अस्यन्-न्ती, / निरस्यन्, | आसयन्-न्ती, | असिसिषन्-न्ती ; |
| असिष्यन्-न्ती-ती, | आसयिष्यन्-न्ती-ती, | असिसिषिष्यन्-न्ती-ती ; |
| [4]निरस्यमानः, निरस्यन्, | आसयमानः, | आसयिष्यमाणः ; |
| अः-असौ-असः ; | — | — |
| [5]निरस्तम्-[A]स्तवान्, / [B]असितमनेन, | आसितः, | असिसिषितः-तवान् ; |
| असः, सन्न्यासी[C], | आसः, | असिसिषुः, आसिसयिषुः ; |

1. 'ऋदोरप्' (3-3-57) इत्यप् भावे।
2. 'एरच्' (3-3-56) इत्यच् ।
3. 'दिवादिभ्यः श्यन्' (3-1-69) इति श्यन् ।
4. 'उपसर्गादस्यत्यूह्योर्वावचनम्' (वा. 1-3-29) इति शानजपि ।
5. धातोरुदित्वात् 'यस्य विभाषा' (7-2-15) इतीण्न ।

A. 'राक्षसान् वद्धयत्सु पिण्डीशूरान् निरस्तवान् ।' भ.का. (5-85.)

B. 'सौनागा अस्यतेर्भावे निष्ठायां विकल्पेन इटमिच्छन्ति' इति काशिका (7 2-17.) । तेन इदमपि रूपं साधु ।

C. 'उवाच मारुतिर्हृष्टे सन्न्यासिन्यत्र वानरान्' भ. का. (7-76.)

| | | |
|---|---|---|
| असितव्यम्, | आसयितव्यम्, | असिसिषितव्यम्; |
| असनीयम्, | आसनीयम्, | असिसिषणीयम्; |
| आस्यम्, समस्या[1], | आस्यम्, | असिसिष्यम्; |
| ईषदसः, दुरसः, स्वसः; | — | — |
| [A]अस्यमानः, | आस्यमानः, | असिसिष्यमाणः; |
| निरासः, व्यासः,[B] प्रासः[2] इष्वासः[2A], | | आसः, असिसिषुः; |
| असितुम्, | आसयितुम्, | असिसिषितुम्; |
| अस्तिः, उपास्तिः, | आसना, | असिसिषा, आसिसयिषा; |
| निरसनम्, | निरासनम्, | असिसिषणम्; |
| [3]असित्वा, अस्त्वा, | आसयित्वा, | असिसिषित्वा; |
| पर्यस्य-न्यस्य[C]-निरस्य, | निरास्य, | निरसिसिष्य; |

| | | | |
|---|---|---|---|
| आसम् २<br>असित्वा २<br>अस्त्वा २; | [4]दृघहात्यासं<br>गाःपाययति, | आसम् २,<br>आसयित्वा २, | असिसिषम् २;<br>असिसिषित्वा २; |

[5]असुरः, असिः[6].

## (54) "अंस[D] सङ्घाते" (X-चुरादिः-1918. सक. से. उभय.)

अदन्तः।

| | |
|---|---|
| अंसकः-सिका, | अंसिसयिषकः-षिका; |
| अंसयिता-त्री, | अंसिसयिषिता-त्री; |

1. बाहुलकात् संज्ञायां क्यपि समस्या इति रूपं साधु।
2. प्रास्यते इति प्रासः। 'अकर्तरि च कारके संज्ञायाम्' (3-3-19) इति भावे घञ्।
2A. इषवोऽस्यन्ते अनेन इति इष्वासः। 'हलश्च' (3-3-121.) इति करणे घञ्। 'इष्वासो धन्वधन्विनोः' इति हैमः।' इति अमरसुधा।
3. 'उदितो वा' (7-2-56) इतीड् वा।
4. 'अस्यतितृषोः क्रियान्तरे कालेषु (3-4-57) इति णमुल्।
5. 'असेरुरन्' (द. उ. 8-24.) इति उरन्।
6. असतीति=असिः। इः प्रत्ययः। (द. उ. 1. 63.)

A. 'दीव्यमानं शितान् बाणान् अस्यमानं महागदाः।' भ. का. (5-81.)
B. 'नाडायनो बादरिकश्च तस्मै व्यासश्च कानीनमुनिर्गरीयान्।' धा. चि. 1-64.
C. 'भ्रातरि न्यस्य यातो मां मृगावित् मृगयामसौ' भ. का. (5. 82.)
D. "'अंस समाघाते'। समाघातो=विभाजनम्। अंसयति। चन्द्रो दन्त्यान्तमाह-अंसयति। मयूरव्यंसकः।" इति क्षीरतरङ्गिणी।

| | |
|---|---|
| अंसयन्-न्ती, | अंसिसयिषन्-न्ती ; |
| अंसयिष्यन्-न्ती-ती, | अंसिसयिषिष्यन्-न्ती-ती ; |
| अंसयमानः, | अंसिसयिषमाणः ; |
| अंसयिष्यमाणः, | अंसिसयिषिष्यमाणः ; |
| अन्[1]-अंसौ-अंसः ; | — |
| अंसितम्-तः, | अंसिसयिषितम्-तः-तवान् ; |
| अंसः, | अंसिसयिषुः ; |
| अंसयितव्यम्, | अंसिसयिषितव्यम् ; |
| अंसनीयम्, | अंसिसयिषणीयम् ; |
| अंस्यम्, | अंसिसयिष्यम् ; |
| ईषदंसः, दुरंसः, स्वंसः ; | — |
| अंस्यमानः, | अंसिसयिष्यमाणः ; |
| अंसः, | अंसिसयिषः ; |
| अंसयितुम्, | अंसिसयिषितुम् ; |
| अंसना, | अंसिसयिषा ; |
| अंसनम्, | अंसिसयिषणम् ; |
| अंसयित्वा, | अंसिसयिषित्वा ; |
| समंस्य[3], उदंस्य[4], | समंसिसयिष्य ; |
| अंसम् २, अंसयित्वा २, | अंसिसयिषम् २ ; अंसिसयिषित्वा २. |

(55) " अह व्याप्तौ " (V-स्वादिः-1272-सक.सेट्.पर.)

| | | |
|---|---|---|
| आहकः-हिका, | आहकः-हिका, | अजिहिष[5]कः-षिका ; |
| अहिता-त्री, | आहयिता-त्री, | अजिहिषिता-त्री ; |

| | | |
|---|---|---|
| अह्व[1]न्-ती, | आह्वयन्-न्ती, | अजिह्विषन्-न्ती ; |
| अह्विष्यन्-न्ती-ती, | आह्वयिष्यन् न्ती-ती, | अजिह्विषिष्यन्-न्ती-ती, |
| — | आह्वयमानः, | आह्वयिष्यमाणः, |
| अ[2]ट्-अड्-अहौ-अहः, | — | — |
| अह्वितम्-तः, | आह्वितः, | अजिह्विषितः-तवान् ; |
| अह्वः, | आह्वः, अजिह्विषुः, | आजिह्वयिषुः ; |
| अह्वितव्यम्, | आह्वयितव्यम्, | अजिह्विषितव्यम् ; |
| अह्वनीयम्, | आह्वनीयम्, | अजिह्विषणीयम् ; |
| आह्व्यम्, | आह्व्यम्, | अजिह्विष्यम् ; |
| ईषदह्वः, दुरह्वः, स्वह्वः, | — | — |
| अह्व्यमानः, | आह्व्यमानः, | अजिह्विष्यमाणः ; |
| आह्वः, | आह्वः, | अजिह्विषः ; |
| अह्वितुम्, | आह्वयितुम्, | अजिह्विषितुम् ; |
| [3]आढिः, | आह्वना, | अजिह्विषा, आजिह्वयिषा ; |
| अह्वनम्, | आह्वनम्, | अजिह्विषणम् ; |
| अह्वित्वा, | आह्वयित्वा, | अजिह्विषित्वा ; |
| समह्व्य, | समाह्व्य, | समजिह्विष्य ; |
| आह्वम् २, अह्वित्वा २, | आह्वम् २, आह्वयित्वा २, | अजिह्विषम् २; अजिह्विषित्वा २. |

(56) 'अहि गतौ' (I-भ्वादिः-635-सक-सेट्. आत्मनेपदी)

'अहि क्षिद् वक्रगतौ' इति काशकृत्स्नधातुपाठे पठ्यते—इति क्षीरस्वामी।

| | | |
|---|---|---|
| [4]अंहकः-हिका, | अंहकः-हिका, | अञ्जि[5]हिषकः-षिका ; |
| अंहिता-त्री, | अंहयिता-त्री, | अञ्जिहिषिता-त्री ; |

| | | |
|---|---|---|
| अंहयन्-न्ती, | अंहयिष्यन्-न्ती-ती ; | — |
| अंह्यमानः, | अंहयमानः, | अञ्जिंहिषमाणः ; |
| अंहिष्यमाणः, | अंहयिष्यमाणः, | अञ्जिंहिषिष्यमाणः ; |
| अन्-अंहौ-अंहः ; | — | — |
| अंहितः-तं, | अंहितः, | अञ्जिंहिषितः—तवान् ; |
| अंहः, अंहः, | अञ्जिंहिषुः , | अञ्जिंहयिषुः ; |
| अंहितव्यम् , | अंहयितव्यम् , | अञ्जिंहिषितव्यम् ; |
| अंहनीयम् , | अंहनीयम् , | अञ्जिंहिषणीयम् ; |
| अंह्यम् , | अंह्यम् , | अञ्जिंहिष्यम् ; |
| ईषदंहः, दुरंहः, स्वंहः ; | — | — |
| अंह्यमानः, | अंह्यमानः, | अञ्जिंहिष्यमाणः ; |
| अंहः, | अंहः, | अञ्जिंहिषः ; |
| अंहितुम् , | अंहयितुम् , | अञ्जिंहिषितुम् ; |
| अंहा[1], अंहना, | अञ्जिंहिषा[A], | अञ्जिंहयिषा ; |
| अंहनम् , | अंहनम्, | अञ्जिंहिषणम् ; |
| अंहित्वा, | अंहयित्वा, | अञ्जिंहिषित्वा ; |
| समंह्य, | समंह्य, | समञ्जिंहिष्य ; |
| अंहम् २, अंहित्वा २, | अंहम् २, अंहयित्वा २, | अञ्जिंहिषम् २, अञ्जिंहिषित्वा २; |

[2]अंहः-अंहसी.

## (57) "अहि भाषार्थः" (X-चुरादिः-1798. सक. से. उभ.)

"अहि भासार्थः" इति क्षीरस्वामी ।

इदित्करणसामर्थ्यात् णिचो वैकल्पिकत्वम् । णिच्पक्षे, णिजभावपक्षे च, पूर्वोक्तभौवादिकांहतिवत् (56) रूपाणि ज्ञेयानि । परं तु, अस्य धातोः

---

1. 'गुरोश्च हलः' (3-3-103) इति अप्रत्ययः ।
2. औणादिकः असुन्प्रत्ययः । पापमर्थः । 'कलुषं वृजिनैनोघमंहोदुरितदुष्कृतम् ।' इत्यमरः ।

A. 'आंहिष्ट जाताञ्जिंहिषस्तदाऽसौ उत्कण्ठमानो भरतो गुरूणाम् ॥' भ. का. (3-25) जाता अञ्जिंहिषा यस्य स इति बहुव्रीहिः ।

णिजभावपक्षे 'शेषात् कर्तरि परस्मैपदम्' (1-3-78) इति परस्मैपदित्वमेव। तदानीं शतरि-अंहन्-न्ती, अंहिष्यन्-न्ती-ती; [A]दुरंहः, इति रूपाणि। ण्यन्तात् सनि तु—

| | |
|---|---|
| अञ्जि[1]हयिषकः-षिका; | अञ्जिहयिष्यम्; |
| | ईषदञ्जिहयिषः-इत्यादि; |
| अञ्जिहयिषिता-त्री; | अञ्जिहयिष्यमाणः; |
| अञ्जिहयिषन्-न्ती; | अञ्जिहयिषः; |
| अञ्जिहयिषिष्यन्-न्ती-ती; | अञ्जिहयिषा; |
| अञ्जिहयिषमाणः; | अञ्जिहयिषितुम्; |
| अञ्जिहयिषिष्यमाणः; | अञ्जिहयिषणम्; |
| अञ्जिहयिषितः-तवान्; | अञ्जिहयिषित्वा; |
| अञ्जिहयिषुः; | समञ्जिहयिष्य; |
| अञ्जिहयिषितव्यम्; | अञ्जिहयिषम् २; }<br>अञ्जिहयिषित्वा २; } |
| अञ्जिहयिषणीयम्; | इत्यादिरूपाणीति विशेषः। |

## आकारादिधातवः।

### (58) "आछि आयामे" (I-भ्वादिः-209-अक. से. पर-)

| | | |
|---|---|---|
| [2]आञ्छकः-ञ्छिका, | आञ्छकः-ञ्छिका, | आचिञ्छिषकः[3]-षिका; |
| आञ्छिता, त्री, | आञ्छयिता-त्री, | आचिञ्छिषिता-त्री; |
| आञ्छन्-न्ती, | आञ्छयन्-न्ती, | आचिञ्छिषन्-न्ती; |
| आञ्छिष्यन्-ती-न्ती, | आञ्छयिष्यन्-ती-न्ती, | आचिञ्छिषिष्यन्-न्ती-ती; |
| — | आञ्छयमानः, | आञ्छयिष्यमाणः; |

1. 'न न्द्राः संयोगादयः' (6-1-3) इति नकारस्य द्वित्वनिषेधः। 'कुहोश्चुः' (7-4-62) इति चुत्वम्। अनुस्वारः। परसवर्णश्च।
2. 'इदितो नुम् धातोः' (7-1-58) इति नुम्।
3. 'न न्द्राः—' (6-1-3) इति नकारस्य द्वित्वनिषेधः। 'छे च' (6-1-73) इति अभ्यासस्य तुक्। चुत्वम्।

A. "वीर्यं दुरंहमभिरंहय मंहयामो मौर्ग्ध्यं प्रलङ्घ्य च तोह्य निर्मदत्वम्। संनाडयन्त्व इति पूरितरोजशाङ्ग नार्यो हरेः समरकेलिमसिष्वदन्त॥" धा. का. 3-47.

| | | |
|---|---|---|
| [1]आन्-आञ्छौ-आञ्छः ; | — | — |
| आञ्छितम्-^तः, | आञ्छितः, | आचिच्छिषितम्-तः-तवान् ; |
| आञ्छः, आञ्छः, | आचिच्छिषुः, | आचिच्छिषुः ; |
| आञ्छितव्यम्, | आञ्छयितव्यम्, | आचिच्छिषितव्यम् ; |
| आञ्छनीयम्, | आञ्छनीयम्, | आचिच्छिषणीयम् ; |
| आञ्छ्यम्, | आञ्छ्यम्, | आचिच्छिष्यम् ; |
| ईषदाञ्छः, दुराञ्छः, | स्वाञ्छः ; | — |
| [2]आञ्छ्यमानः, | आञ्छ्यमानः, | आचिच्छिष्यमाणः ; |
| आञ्छः, | आञ्छः, | आचिच्छिषः ; |
| आञ्छितुम्, | आञ्छयितुम् ; | आचिच्छिषितुम् ; |
| आञ्छा, आञ्छना, | आचिच्छिषा, | आचिच्छिषा ; |
| आञ्छनम्, | आञ्छनम्, | आचिच्छिषणम् ; |
| आञ्छित्वा, | आञ्छयित्वा, | आचिच्छिषित्वा ; |
| समाञ्छ्य, | समाञ्छ्य, | समाचिच्छिष्य ; |
| आञ्छम् २, | आञ्छम् २, | आचिच्छिषम् २ ; |
| आञ्छित्वा २, | आञ्छयित्वा २, | आचिच्छिषित्वा २ ; |

(59) "आप्लृ व्याप्तौ" (V-स्वादिः-1260. सक. अनिट्-पर.)

"आपयत्यापतीत्यापेयौं या णौ लभ्ने पदे । व्याप्त्यर्थस्यास्य तु स्यादेशाप्नोतीति पदं भवेत् ॥" (137) इति देवः ।

| | | |
|---|---|---|
| आपकः-प्रापकः-पिका, | आपकः-पिका, | ईप्सकः-[3]प्सिका ; |
| आप्ता-प्त्री, | प्रापयिता-त्री, | ईप्सिता-त्री ; |
| [4]आप्नुवन्-वती, | प्रापयन्-न्ती, | ईप्सन्-न्ती ; |

1. छकारस्य 'संयोगान्तस्य—' (8-2-23) इति लोपः ।
2. इदित्वात् 'अनिदिताम्' (6-4-24) इति नलोपो न ।
3. सनि 'आप्ज्ञप्यृधामीत्' (7-4-55) इतीत्वे, द्वित्वे, 'अत्र लोपोऽभ्यासस्य' (7-4-58) इत्यभ्यासलोपः ।
4. 'स्वादिभ्यः—' (3-1-73) इति श्नुप्रत्यये उवङ् ।

A. 'सुराधिपे म्लेच्छजनैर्दुराधे श्रीलाञ्छितात्मा स्थितपुष्पलाञ्छिते । मम स्थिते वाञ्छितदे हरिर्मुदे तदाञ्छितालीकजनाप्तये नृपम् ॥' धा. का. 1-२५.
'दोर्दण्डाञ्छितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यतः' इति श्लोकः श्रीरस्याप्युपात्तः ।

| | | |
|---|---|---|
| आप्नुवन्-न्ती-ती, | आपयिष्यन्-न्ती-ती, | ईप्सिष्यन्-न्ती-ती; |
| — | प्रापयमाणः, | प्रापयिष्यमाणः; |
| आपः[1]; | — | — |
| आप्तः-[A]संप्राप्तः-प्तम्-प्तवान्, | प्रापितम्, | [B]ईप्सितः-तवान्; |
| आपः, आपः, व्यापी-व्यापिनी,[C] | ईप्सुः, आपिपयिषुः; | — |
| आप्तव्यम्, | आपयितव्यम्, | ईप्सितव्यम्; |
| आपनीयम्, | प्रापणीयम्, | ईप्सनीयम्; |
| [D]संप्राप्यः, आप्यम्, | प्राप्यम्, | ईप्स्यम्; |
| ईषदापः-दुरापः-स्वापः; | — | — |
| प्राप्यमानः, | प्राप्यमानः, | ईप्स्यमानः; |
| आपः, | आपः, | ईप्सः; |
| आप्तुम्, | आपयितुम्, | ईप्सितुम्; |
| [2]आप्तिः, | प्रापणा, | ईप्सा, आपिपयिषा; |
| प्रापणम्, | आपनम्, | ईप्सनम्; |
| आप्त्वा, | आपयित्वा, | ईप्सित्वा; |
| प्राप्य, | [E]प्रापय्य[3]=प्राप्य, | प्रेप्स्य; |

---

1. 'आप्नोतेर्ह्रस्वश्च' (द. उ. 7-1.) इति क्विप्सन्नियोगेन ह्रस्वत्वे, 'अप्तृन्—' (6-4-11) इति सर्वनामस्थाने दीर्घः। 'आपः स्त्री भूम्नि वार्वारि—' इति अमरकोशात् नित्यं बहुवचनम्।
2. 'क्तिन् आबादिभ्यः निष्ठायामनिड्भ्यः' (वा. 3-3-94) इति क्तिन्। 'गुरोश्च हलः' (3-3-103) इत्यस्यापवादः।
3. 'विभाषाऽऽपः' (6-4-57) इति णेरयादेशो वा।

A. 'तस्य मित्रीयतो दूतः संप्राप्तोऽस्मि वशंवदः' भ. का. 6-100.
B. 'अन्वयादिविभिन्नानां यथासंख्यमनीप्सितम्' भ. का. 9. 132.
C. 'दिग्व्यापिनीर्लोचनलोभनीया मृजाऽन्वयाः स्नेहमिव स्रवन्तीः' भ. का. 2-13.
D. 'संप्राप्यो निजशक्तिराद्धतपसः साधोः स देवोऽपि तामूर्ज्वोकर्तुमुपानशे सुकृतिनीं प्रस्तिघ्नुवानः खलान् ॥' धा. का. 2-69.
E. 'प्रापय्य शौरिमिव तां भगिनीं च वाक्यैरक्षीणसौहृदमपेतशुचाऽवतानीत्' वा.वि. 3-56.

| | | |
|---|---|---|
| आपम् २, | आपम् २, | ईप्सम् २ ; |
| आप्त्वा २, | आपयित्वा २, | ईप्सित्वा २ ; |

(60) "आप्लृ लम्भने" (X-चुरादिः-1840-सक. सेट्. उभ.)

आप्लृधीयः । लम्भनम्=प्राप्तिः—इति क्षीरस्वामी ।

'आपयत्यापनीत्यापेयौ वा णौ लम्भने पदे । व्याप्त्यर्थस्यास्य तु स्यादेवाप्नोतीति पदं भवेत् ॥' (137) इति देवः ।

आधृषीयत्वात् णिचो वैकल्पिकत्वम् । णिजभावपक्षे रूपाणि पूर्वं लिखितस्याप्नोतेरिव (59) ज्ञेयानि । णिजभावपक्षे 'शेषात् कर्तरि परस्मैपदम्' (1-3-78) इति परस्मैपदित्वमेव । तत्र शतरि [A]'आपन्-न्ती' इत्येव रूपम् ; शप औत्सर्गिकत्वात् । ईप्सकः-इत्यादि च रूपम् । णयन्तात् सनि तु—

| | |
|---|---|
| आपिपयिषकः-पिका, | आपिपयिषिष्यम् ; |
| आपिपयिषिता-त्री, | आपिपयिषिष्यमाणः ; |
| आपिपयिषन्-न्ती, | आपिपयिषितुम् ; |
| आपिपयिषिष्यन्-न्ती-ती, | आपिपयिषुः ; |
| आपिपयिषमाणः, | आपिपयिषा ; |
| आपिपयिषिष्यमाणः, | आपिपयिषणम् ; |
| आपिपयिषितः-तं-तवान्, | आपिपयिषित्वा ; |
| आपिपयिषुः, | समापिपयिष्य ; |
| आपिपयिषितव्यम् ; | आपिपयिषम् २ ; } इति रूपाणि |
| आपिपयिषणीयम् ; | आपिपयिषित्वा २ ; } ज्ञेयानि । |

(61) "आस उपवेशने" (II-अदादिः-1021—अक. से. आ.)

आसकः-सिका, आसकः-सिका, आसिसिषकः-षिका, दुरासिका[1] ;
आसिता-त्री, आसयिता-त्री, आसिसिषिता-त्री ;

---

1. 'संज्ञायाम्' (3-3-109) इति ण्वुल् । 'दुरीश्वरद्वारबहिर्वितर्दिकादुरासिकार्थै रचितोऽयमञ्जलिः ।' इति वैराग्यशतके (3) ।

A. "आपन् खेदमरिं तनत्रनहितं चिक्षेप गोपः हरिः सूर्योस्थो वितनन् धनिर्दिवमगात् दृप्तो यथा वादितः" भा. का. 3-51.

A[A]अध्यासयन्,  [1]आसयन्-न्ती,  आसयिष्यन्-न्ती-ती ;
[2]आसीनः,  [B]आसिसिषमाणः,  आसिसिषिष्यमाणः ;
आः-आसौ-आसः ;  —  —
आसितम्-तः-तवान्,  आसितः,  आसिसिषितः-तवान् ;
आसः,  आसः,  आसिसिषुः,  आसिसयिषुः;
आसितव्यम्,  आसयितव्यम्,  आसिसिषितव्यम् ;
आसनीयम्,  आसनीयम्,  आसिसिषणीयम् ;
आस्यम्,  आस्यम्,  आसिसिष्यम् ;
ईषदासः-दुरासः-स्वासः ;  —
[C]उपास्यमानः,  आस्यमानः,  आसिसिष्यमाणः ;
आसः,  आसः, [3]कैलासः,  आसिसिषः ;
आसितुम्,  आसयितुम्,  आसिसिषितुम् ;
[4]आसना, [D]उपासना, [5]उपास्तिः[E], आस्या,[6] आसिसिषा ;
आसनम्,  [A]आसनम्,  आसिसिषणम् ;

---

1. 'अणावकर्मकात् चित्तवत्कर्तृकात्' (1-3-88) इति ण्यन्तात् शतैव ।
2. 'ईदासः' (7-2-83) इति आनस्यादेरीकारः ।
3. "केलिः प्रयोजनमस्य = कैलः 'चूडादिभ्य उपसंख्यानम्' (वा. 5-1-110) इत्यण् । आस्यतेऽस्मिन् इत्यासः । 'हलश्च' (3-3-121) इत्यधिकरणे घञ् । कैलश्चासावासश्चेति 'विशेषणं विशेष्येण—' (2-1-57) इति संज्ञात्वात् लोहितशाल्यादिवत् समासो नित्यम् ॥" इति मा. धा. वृत्तिः ।
4. 'ण्यासश्रन्थो युच्' (3-3-107) इति शुद्धादेव धातोः युच् ।
5. बाहुलकात् क्तिन्—इति मा. धा. वृत्तिः ।
6. 'वाऽसरूप—' (3-1-94) इति न्यायेन ण्यदपि भावे इति मा. धा. वृत्तिः ।

A. 'त्रिवर्गपारीणमसौ भवन्तम् अध्यासयन् आसनमेकमिन्द्रः ।
विवेकदत्त्वमगात् सुराणां तं मैथिलो वाक्यमिदं बभाषे ॥' भ. का. 2-46.
B. 'अध्यासिसिषमाणेऽथ वियन्मध्यं निशाकरे ।' भ. का. 8-38.
C. 'आकाशचारिवनिताभिरुपास्यमाना साऽऽह स्म तन्मनसिकृत्य महान्तमर्थम् ॥' वा. वि. 3-51.
D. 'प्रायोपासनया शान्तिं मन्वानो वालिसम्भवः । युक्त्वा योगं स्थितः शैले विमृश्य चित्तवेदनाम् ॥' भ. का. 7-73.
E. "इहपोऽयमीशः समुपास्तिशीलैराशासितः पीतपटीं वसानः । स्वीयैश्चवंशे [illegible] ॥" ध. क. 2-45.

आसित्वा, आसयित्वा, आसिसिषित्वा ;
उपास्य, समास्य, उपासिसिष्य ;
आसम् २, आसित्वा २, } आसम् २, आसयित्वा २, } आसिसिषम् २ ; आसिसिषित्वा ; }

(61-A) "इ गतौ" (I-भ्वादिः-320-सक-अनिट्-पर-)

'अयत्येतीयते गत्यां अधीतेऽध्येति चेङिकोः।' (श्लो 14) इति देवः।

'इट किट कटी गतौ' इति धातुपाठे निर्दिश्यते। 'कटी' इत्यत्र 'कटि + इ-' इति ह्रस्वेकारात्मकं धात्वन्तरं प्रश्लिष्टमिति केचित्। तस्य च अयति-इयाय-एता-इत्यादीनि रूपाणि। अत एव 'उदयति विततोर्ध्वरश्मिरज्जौ अहिमरुचौ हिमधाम्नि याति चास्तम्' (शिशुपालवधे 4-20), 'उदयति दिननाथो याति शीतांशुरस्तम्' इत्यादिप्रयोगाणामुपपत्तिः।

आयकः-यिका, आयकः-यिका, [1]ईयिषकः-षिका ;
[2]एता-त्री, आययिता-त्री, ईयिषिता-त्री ;
[A]उदयन्, अयन् } न्ती, आययन्-न्ती, ईयिषन्-न्ती ;
एष्यन्-न्ती-ती, आययिष्यन्-न्ती-ती, ईयिषिष्यन्-न्ती-ती ;
— आययमानः, आययिष्यमाणः ; —
[3]इत्-इतौ-इतः ; — —
इतं-तः-तवान्, आयितः, ईयिषितः, तवान् ;
अयः, आयः, ईयिषुः, आयियिषुः ;
एतव्यम्, आययितव्यम्, ईयिषितव्यम् ;
अयनीयम्, आयनीयम्, ईयिषणीयम् ;
एयम्, उपेयम्, आय्यम्,[4] ईयिष्यम् ;

1. 'इको झल्' (1-2-9) इति सनः कित्वाद् गुणाभावः। 'अज्झनगमां-' (6-4-16) इति दीर्घः। 'सन्यतः' (7-4-79) इत्यभ्यासस्येत्वम्। 'श्र्युकः क्किति' (7-2-11) ति इण्णिषेधः।
2. 'सार्वधातुकार्धधातुकयो-' (7-3-84) रिति गुणः।
3. 'ह्रस्वस्य पिति कृति तुक्' (6-1-71) इति तुक्।
4. 'एङि पररूपम्' (6-1-94) इति पररूपम्।
A. 'प्रकाशितातोदयदंशुमज्जितेकोऽङ्कलैर्मुदिताकेरीधितीन्।' धा. का. 1-42

ईषदयः-दुरयः-स्वयः; —
[1]ईयमानः, आय्यमानः, ईषिष्यमाणः;
[2]अयः, [3]आयः, आयः, ईषिषः;
एतुम्, आययितुम्, ईषिषितुम्;
इतिः, आयना, ईषिषा, आयियायिषा;
अयनम्, आयनम्, ईषिषणम्;
इत्वा, आययित्वा, ईषिषित्वा;
समित्य, [4]उपेत्य, समाय्य, समीषिष्य;
आयम् २ इत्वा २, आयम् २ आययित्वा २, ईषिषम् २ ईषिषित्वा २;

(62) "इक् स्मरणे" (II-अदादिः-1047-सक. अनिट्-पर.)

'अयत्येतीयते गत्यां, अधीतेऽध्येति चेङिकोः।' (14) इति देवः।

नित्यमधिपूर्वकः।

अध्यापकः-यिका, [5]अधिगमकः-मिका, [6]अधिजिगमिषकः-षिका;
अध्येता-त्री, अधिगमयिता-त्री, अधिजिगमिषिता-त्री;
[A]अधीयन्-न्ती, अधियन्, अधिगमयन्-न्ती, अधिजिगमिषन्-न्ती;
अध्येष्यन्-न्ती-ती, अधिगमयिष्यन्-न्ती-ती, अधिजिगमिषिष्यन्-न्ती-ती;
— अधिगमयमानः, अधिगमयिष्यमाणः;

---

1. 'अकृत्सार्वधातुकयो –' (7-4-25) रिति दीर्घः।
2. 'एरच्' (3-3-56) इति भावेऽच्।
3. 'अकर्तरि च कारके–' (3-3-19) इति घञ्।
4. 'षत्वतुकोरसिद्धः' (6-1-86) इत्येकादेशशास्त्रस्यासिद्धत्वात् तुक्।
5. 'णौ गमिरबोधने' (2-4-46) 'इण्वदिकः' (वा. 2-4-45) इत्यतिदेशात् गमादेशः। अमन्तत्वेन मित्त्वात् 'मितां ह्रस्वः' (6-4-92) इति उपधाह्रस्वः। अन्यत्र–बोधने प्रत्याययकः-यिका-प्रत्यायितम्–इत्यादि।
6. 'सनि च' (2-4-47) इति गमादेशः। 'गमेरिट् परस्मैपदेषु' (7-2-58) इतीडागमः। बोधने तु प्रतीषिषकः इत्यादि।

A. 'सूनोऽपि गङ्गासलिलैः पवित्वा सहास्वमात्मानमनल्पमन्युः। ससीतयो राघवयोरधीयन् श्वसन् कदुष्णं पुरमाविवेश॥' भ. का. 3-18 'इण्वदिकः' (वा. 2-4-45) इति अतिदेशेन 'इणो यण्' (6-4-81) इत्यत्र यथा भाष्यम्। तदानीं 'अधियन्' इति रूपमिति केचित्।

अधीत्[1]-अधीतौ-अधीतः ; — —

अधीतः-तम्, अधिगमितः, अधिजिगमिषितः-तवान् ;

अध्ययः, [2]मन्त्राध्यायः, अधिजिगमिषुः, अधिजिगमयिषुः ;

अध्येतव्यम्, अधिगमयितव्यम्, अधिजिगमिषितव्यम् ;

अध्ययनीयम्, अधिगमनीयम्, प्रत्यायनीयम्, अधिजिगमिषणीयम् ;

अध्येयम्, [A]अधीत्यः, } प्रत्याय्यम्, अधिगम्यम्, अधिजिगमिष्यम् ;

ईषदध्ययः, दुरध्ययः, स्वध्ययः ; — —

अधीयमानः, अधिगम्यमानः, प्रत्याय्यमानः, अधिजिगांसमानः[3] ;

अध्यायः, अधिगमः, प्रत्ययः, अधिजिगमिषः ;

अध्येतुम्, अधिगमयितुम्, अधिजिगमिषितुम् ;

अधीतिः, अधिगमना, अधिजिगमिषा, अधिजिगमयिषा ;

अध्ययनम्, अधिगमनम्, अधिजिगमिषणम् ;

[4]अधीत्य, [5]अधिगमय्य, अधिजिगमिष्य ;

अध्यायम् २, [6]अधिगमम् २, अधिगामम् २, } अधिजिगमिषम् २ ;

## (63) "इख गतौ" (I-भ्वादिः-140-सक. से-पर.)

एखकः-खिका, एखकः-खिका, [7]एचिखिषकः-षिका ;

---

1. 'षत्वतुकोरसिद्धः' (6-1-86) इत्येकादेशस्यासिद्धत्वात् तुक् ।
2. 'कर्मण्यण्' (3-2-1) इत्यण् ।
3. 'अज्झनगमां सनि' (6-4-16) इति दीर्घः ।
4. 'षत्वतुकोरसिद्धः' (6-1-86) इत्येकादेशशास्त्रासिद्धया तुक् ।
5. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः ।
6. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति दीर्घविकल्पः ।
7. ओणेः ऋदित्करणात् लिङ्गात् उपधाकार्यं प्रबलम् । लघूपधगुणः ।

A. 'इण्वदिकः (वा. 2-4-45)' इत्यतिदेशात्–'**एतिस्तु**' (3-1-109) इति क्यपि 'अधीत्य' इति रूपम् । 'इत्यः स्वधीतोपनिषद्भिरेषामधीत्यरूपः स वियन् क्रमेण ।' धा. का. 2-48. इति प्रयोगः । '.......'एतिस्तु—' (3-1-109) इति क्यब्विधौ नित्यमधिपूर्वत्वादस्येतिग्रहणेन न ग्रहः । तथा च **भाष्ये—'अध्येयं** व्याकरणं' इति यदन्तो निर्दिश्यते' इति **माधवधातुवृत्तौ** ।

एखिता-त्री, एखयिता-त्री, एचिखिषिता-त्री ;
[A]एखन्-न्ती, एखयन्-न्ती, एचिखिषन्-न्ती ;
एखिष्यन्-न्ती-ती, एखयिष्यन्-न्ती-ती, एचिखिषिष्यन्-न्ती-ती ;
एखयमानः, एखयिष्यमाणः ; —
इक्-इखौ-इखः ; — —
इखितः-तम्, एखितः, एचिखिषितः-तवान् ;
[1]इखः, एखः, एचिखिषुः, एचिखयिषुः ;
एखितव्यम्, एखयितव्यम्, एचिखिषितव्यम् ;
एखनीयम्, एखनीयम्, एचिखिषणीयम् ;
एख्यम्, एख्यम्, एचिखिष्यम् ;
ईषदेखः-दुरेखः-स्वेखः ; —
[2]इख्यमानः, एख्यमानः, एचिखिष्यमाणः ;
एखः, एखः, एचिखिषः ;
एखितुम्, एखयितुम्, एचिखिषितुम् ;
[3]इक्तिः, एखना, एचिखिषा, एचिखयिषा ;
एखनम्, एखनम्, एचिखिषणम् ;
[4]एखित्वा, ऐखयित्वा, एचिखिषित्वा ;
प्रेख्य, समिख्य, समेख्य, समेचिखिष्य ;
एखम् २, एखित्वा २, } एखम् २, एखयित्वा २, } एचिखिषम् ; एचिखिषित्वा २, }

(64) " इखि गतौ " (I-भ्वादिः-141-सक. सेट्. पर. )

[5]इङ्खकः-खिका, इङ्खकः-खिका, [6]इञ्चिखिषकः-षिका ;

---

1. 'इगुपधज्ञाप्रीकिरः कः' (3-1-135) इति कर्तरि कः, गुणाभावः ।
2. 'क्ङिति च' (1-1-5) इति गुणनिषेधः ।
3. 'खरि च' (8-4-55) इति चर्त्वम् ।
4. 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधे लघूपधगुणः ।
5. 'इदितो नुम्—' (7-1-58) इति नुम् ।
6. 'अजादेर्द्वितीयस्य—' (6-1-2) इति द्वित्वम् । 'न न्द्राः संयोगादयः' (6-1-3) इति नकारस्य द्वित्वनिषेधः ।

A. "एखच्चकोरोत्करमिङ्खितं शुकैः प्रेङ्खलतावल्गनरङ्गमण्डपम् । विलङ्घदेणं शबराङ्गनाजनप्रवङ्खितं मङ्खलधेनुनङ्खितम् ॥" धा. का. (1-20)

| | | |
|---|---|---|
| इङ्खिता-त्री, | इङ्खयिता-त्री, | इञ्चिखिषिता-त्री ; |
| इङ्खन्-न्ती, | इङ्खयन्-न्ती, | इञ्चिखिषन्-न्ती ; |
| इङ्खिष्यन्-न्ती-ती | इङ्खयिष्यन्-न्ती-ती, | इञ्चिखिषिष्यन्-न्ती-ती ; |
| — | इङ्खयमानः, | इङ्खयिष्यमाणः ; |
| इन्-इङ्खौ-इङ्खः ; | — | — |
| [A]इङ्खितः-तम्, | इङ्खितः, | इञ्चिखिषितः-तवान् ; |
| इङ्खः, [B]प्रेङ्खणः,इङ्खः, | इञ्चिखिषुः, | इञ्चिखयिषुः ; |
| इङ्खितव्यम्, | इङ्खयितव्यम्, | इञ्चिखिषितव्यम् ; |
| [1]प्रेङ्खणीयम्, | इङ्खनीयम्, | इञ्चिखिषणीयम् ; |
| इङ्ख्यम्, | इङ्ख्यम्, | इञ्चिखिष्यम् ; |
| ईषदिङ्खः, दुरिङ्खः, स्विङ्खः ; — | | — |
| इङ्ख्यमानः, | इङ्ख्यमानः, | इञ्चिखिष्यमाणः ; |
| इङ्खः, | इङ्खः, | इञ्चिखिषः ; |
| इङ्खितुम्, | इङ्खयितुम्, | इञ्चिखिषितुम् ; |
| [2]इङ्खा, | [3]इङ्खना, | [4]इञ्चिखिषा, इञ्चिखयिषा ; |
| प्रेङ्खणम्, | प्रेङ्खणम्, | इञ्चिखिषणम् ; |
| इङ्खित्वा, | इङ्खयित्वा, | इञ्चिखिषित्वा ; |
| प्रेङ्ख्य, | समिङ्ख्य, | प्रेञ्चिखिष्य ; |
| [5]इङ्खम् २, इङ्खित्वा २, | इङ्खम् २, इङ्खयित्वा २, | इञ्चिखिषम् २ ; इञ्चिखिषित्वा २ ; |

1. 'कृत्यचः' (8-4-29) इति णत्वम् ।
2. 'गुरोश्च हलः' (3-3-103) इति अप्रत्ययः ।
3. 'ण्यासश्रन्थो युच्' (3-3-107) इति युच् ।
4. 'अ प्रत्ययात्' (3-3-102) इत्यः प्रत्ययः ।
5. 'नित्यवीप्सयोः' (8-1-4) इति द्वित्वम् ।

A. "एखचकोरोत्करमिङ्खितं शुकैः प्रेङ्खलतावल्यमरक्षमण्डपम् । विलङ्घदेणं शबराङ्गना-जनप्रवङ्गितं मङ्कलधेनुतङ्गितम् ॥" धा. का. 1-20.

B. "वनान्तप्रेङ्खणः पापः फलानां परिङ्गिसकः । प्रक्षिक्षिप्यति नो भूयः प्रणिन्धास्मान्मधूनयम् ॥" भ. का. 9-106. 'प्रेङ्खतीति—प्रेङ्खणः । बाहुलकात् कर्तरि ल्युट् । इति भट्टिकाव्यव्याख्याने ।

## (65) " इगि गत्यर्थः " (I-भ्वादिः-153. सक. से. पर.)

इङ्गकः-ङ्गिका-[A]इङ्गितम्-तः-तवान्, इत्यादीनि सर्वाण्यपि पूर्वोक्तेखि-(64) धातुवद्रूपाणि ज्ञेयानि ।

## (66) " इङ् अध्ययने " (II-अदादिः-1046. सक-अनिट्-आत्म.)

नित्यमधिपूर्वः । 'अयत्येतीयते गत्यां, अधीतेऽध्येति चेङिकोः ।' इति (श्लो 14) देवः ।

'धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्तते । विशिनष्टि तमेवार्थमुपसर्गगतिस्त्रिधा ॥'

इति क्षीरतरङ्गिण्यामुद्धृतः श्लोकः ।

| | | |
|---|---|---|
| अध्यायकः-यिका, | [1]अध्यापकः-पिका, | [2]अधिजिगमिषकः-षिका ; |
| अध्येता-त्री, | अध्यापयिता-त्री, | अधिजिगमिषिता-त्री ; |
| [3]अधीयन् पारायणम्, [4]अधीयती, | [A]अध्यापयन्-[5]न्ती, | अध्यापयिष्यन्-न्ती-ती ; |
| [6]अधीयानः, [B] | — | अधिजिगांसमानः[7]; |
| अध्येष्यमाणः, | — | [8]अधिजिगांसिष्यमाणः ; |

---

1. 'क्रीङ्जीनां णौ' (6-1-48) इति आत्वे 'अर्तिह्री-' (7-3-36) इति पुक् ।
2. 'इङश्च' (2-4-48) इति सनि गमिः । 'गमेरिट् परस्मैपदेषु' (7-2-58) इति इट् । 'परस्मैपदेषु' इत्यस्य 'तङानयोरभावे' इत्यर्थः ।
3. 'इङ्धार्योः शत्रकृच्छ्रिणि' (3-2-130) इति शतृ ।
4. उगितश्च' (6-3-45) इति स्त्रियां ङीप् । अधीयन् पारायणं अकृच्छ्रेणाधीयान इत्यर्थः ।
5. 'बुधयुधनशजनेङ्-' (1-3-86) इति ण्यन्तात् परस्मैपदमेव ।
6. इयङ् पूर्वम् । पश्चात् दीर्घः ।
7. 'इङश्च' (2-4-48) इति गमादेशः । 'अज्झनगमां सनि' (6-4-16) दीर्घः ।
8. 'आर्धधातुकस्येड्-' (7-2-35) इतीट् ।

A. 'वाचंयमान् स्थण्डिलशायिनश्च युयुक्षमाणान् अनिशं मुमुक्षून् । अध्यापयन्तं विनयात् प्रणेमुः पद्गाः भरद्वाजमुनिं सशिष्यम् ॥' भ. का. 3-41.

B. 'ऋग्यजुषमधीयानान् सामान्यांश्च समर्चयन् । बुभुजे देवसात्कृत्वा शष्पमुष्णं च होमवत् ॥' भ. का. 4-9.

अधीतः[A]-तम्, अध्यापितः, अधिजिगमिषितः-तवान्;

अध्ययः, [1]मन्त्राध्यायः, अध्यापः, अधिजिगमिषुः, [2]अधिजिगापयिषुः; अध्यापिपयिषुः;

अध्येतव्यम्, अध्यापयितव्यम्, अधिजिगमिषितव्यम्;

अध्ययनीयम्, अध्यापनीयम्, अधिजिगमिषणीयम्;

अध्येयम्, अध्याप्यम्, अधिजिगमिष्यम्;

ईषदध्ययः, दुरध्ययः, स्वध्ययः; —

[3]अधीयमानः, अध्याप्यमानः, अधिजिगांस्यमानः;

[4]अध्यायः, [5]अध्यायः, [B]उपाध्यायः, उपाध्याया, [6]उपाध्यायी, [C]उपाध्यायानी, अध्यापः, अधिजिगमिषः;

अध्येतुम्, अध्यापयितुम्, अधिजिगमिषितुम्;

अधीतिः, अध्यापना, अधिजिगमिषा, अधिजिगापयिषा, अध्यापिपयिषा;

अध्ययनम्, अध्यापनम्, अधिजिगमिषणम्;

अधीत्य, अध्याप्य, अधिजिगमिष्य;

अध्यायम् २, अध्यापम् २, अधिजिगमिषम् २;

## (67) "इट गतौ" (I-भ्वादिः-318-सक. सेट्. पर.)

पटकः-टिका, पटकः-टिका, पिटिटिषकः-षिका, पटन्[D]-न्ती, इत्यादीनि रूपाणि 'इख' (63) धातुवत् बोध्यानि।

1. 'कर्मण्यण्' (3-2-1) इत्यण्।
2. 'णौ च संश्चङोः।' (2-4-51) इति गादेशः वा, पक्षे आत्वे पुकि अध्यापिपयिषुः इति रूपम्।
3. कर्मणि यक्।
4. 'अध्यायन्याय–' (3-3-122) इति संज्ञायां अधिकरणे घञ्। पापवादः।
5. 'इङश्च' (3-3-21) इति भावादौ घञ् अपादानार्थम्। अध्ययनमध्यायः।
6. 'अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष्' (वा. 3-3-21) इति ङीष् वा।

A. 'इत्थं स्वधीतोपनिषद्भिरेषामधीत्यरूपः ॥ विधन् क्रमेण। इयञ्जनं राजपथं समायात् वाताकुलोद्भ्रान्तपताकभीषः ॥' धा. का. 2-48.
B. 'ततः कपिश्चमाहारे एकनिर्णायमागतम्। उपाध्याय इवामार्ग सुग्रीवोऽध्यापिपद् दिशाम् ॥' भ. का. 7-31.
C. 'मातुल्योपाध्याययोरानुग् वा' (वा. 4-1-49.) इति स्त्रियामानुग् वा।
D. "चेटैर्विटैश्चानुगतानधीतैरेटस्य वाटुकेटिरजः कटन् ममार ॥" धा. का. 1-42.

(68) "इण् गतौ" (II-अदादिः-1045-अनिट्. सक-पर-)

'अयत्येतीयते गत्याम्, अधीतेऽध्येति चेङिकोः' (14 श्लो.) इति देवः।

[1]आयकः-यिका, [2]गमकः-मिका, [3]प्रत्यायकः-यिका, [4]जिगमिषकः-षिका, [[5]प्रतीषिषकः-षिका ;

एता-त्री, आययिता-त्री, गमयिता-त्री, जिगमिषिता-त्री, प्रतीषिषिता-त्री ;

[6]यन् / [A]निर्यन् } यती, प्रत्याययन्-न्ती, गमयन्-न्ती, जिगमिषन्-न्ती, प्रतीषिषन्-न्ती;

एष्यन्-[7]न्ती-ती, प्रत्याययिष्यन्-न्ती-ती, गमयिष्यन्-न्ती-ती, जिगमिषिष्यन्-न्ती-ती, प्रतीषिषिष्यन्-ती-न्ती ;

— प्रत्याययमानः, प्रत्याययिष्यमाणः ; —

[8]परीत्-परीतौ-परीतः ; — —

इतं-[B]इतः-इतवान्, [9]उपेतः, प्रत्यायितः, अवगमितः, जिगमिषितः, प्रतीषितः-तवान् ;

---

1. 'अचो ञ्णिति' (7-2-115) इति वृद्धौ आयादेशः।
2. 'णौ गमिरबोधने' (2-4-46) इति गमादेशः। अमन्तत्वान्मित्त्वेन उपधाह्रस्वः।
3. इणो बोधनार्थकत्वात् 'अबोधने' (2-4-46) इत्युक्त्या गमादेशाभावः।
4. 'सनि च' (2-4-47) इति गमादेशः। 'गमेरिट् परस्मैपदेषु' (7-2-58) इत्यत्र 'परस्मैपदेषु' इत्यस्य तङानयोरभावे—इत्यर्थकतया अत्र सन इट् भवति।
5. 'सनि च' (2-4-47) इत्यत्रापि 'अबोधने' इत्यनुवृत्त्या गमादेशाभावे, अजादित्वाद् 'अजादेर्द्वितीयस्य' (6-1-2) इति द्वितीयस्यैकाचो द्वित्वे, 'अज्झनगमां सनि' (6-4-16) इति दीर्घः।
6. 'इणो यण्' (6-4-81) इति यणादेशः।
7. 'आच्छीनद्योर्नुम्' (7-1-80) इति नुमागमस्य वैकल्पिकत्वात् रूपद्वयम्।
8. 'षत्वतुकोरसिद्धः' (6-1-86) इत्यनेन एकादेशशास्त्रस्यासिद्धत्वात् तुक्।
9. आ+इतः एतः, उप×एत=इति स्थिते 'एत्येधत्यूठ्सु' (6-1-89) इति वृद्धिं बाधित्वा, 'ओमाङोश्च' (6-1-95) इति पररूपम्।

A. 'निर्यत्स्फुलिङ्गाकुलधूमराशिं किं मूढ भूमौ विनशाम भानुम्। शाद्वन्तनिष्पीडितपीतमिन्दुं छीवाम कुम्भेकुलताऽस्थियन्म्यम्' ॥ भ. का. 12-18.

B. 'अहृत धनेश्वरस्य युधि यः समेतमायो धनं तमहमितो विलोकय विबुधैः कृतोत्तमायोधनम्।' भ. का. 10-36.

अयः, आयः, गमः, [1]इत्वरः, [A]उपेयिवान्[2], ईयिवान्[B], समीयिवान्-
[3]उपेयुषी, [4]अत्ययी, [5]अत्यायः, जिगमिषुः, जिगमयिषुः, प्रतीषिषुः;

एतव्यम्, [6]उपैतव्यम्, प्रत्याययितव्यम्, गमयितव्यम्, जिगमिषितव्यम्, प्रतीषिषितव्यम्;

अयनीयम्, प्रत्यायनीयम्, गमनीयम्, जिगमिषणीयम्, प्रतीषिषणीयम्;

[C]इत्यम्[7], अनभ्याशमित्यः[8], प्रत्याय्यम्, अवगम्यम्, जिगमिष्यम्, प्रतीषिष्यम्;

ईषदयः-दुरयः-स्वयः, ईषदायः-ईषदवगमः-इत्यादि; —

[9]ईयमानः, प्रत्याय्यमानः, अवगम्यमानः, [10]जिगांसमानः, प्रतीष्यमाणः;

---

1. 'इण्नशजिसर्तिभ्यः—' (3-2-163) इति तच्छीलादिषु क्वरप्। तुक्।
2. 'उपेयिवाननाश्वान्—' (3-2-109) इति क्वसुप्रत्ययान्तो निपातितः। 'उप' इत्यस्याविवक्षितत्वात्-समीयिवान् - ईयिवान् - इत्याद्यपि सिध्यति। 'दीर्घ इणः किति' (7-4-69) इति दीर्घः।
3. 'उगितश्च' (4-1-6) इति ङीप्। 'वसोः सम्प्रसारणम्' (6-4-131) इति सम्प्रसारणम्।
4. 'जिदृक्षिविश्रीण्—' (3-2-157) इत्यनेन तच्छीलादिषु इनिः।
5. 'श्याद्व्यधास्रुसंस्र्वतीण्—' (3-1-141) इति 'अति' इत्युपसर्गपूर्वकात् कर्तरि णः प्रत्ययः।
6. 'एत्येधत्यूठ्सु' (6-1-89) इति वृद्धिः।
7 'एतिस्तुशास्—' (3-1-109) इति क्यपि तुक्।
8. 'इण्येऽनभ्याशस्य' (वा-6-3-70) इति पूर्वपदस्य मुम्।
9. 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः।
10. 'अज्झनगमां सनि' (6-4-16) इति दीर्घः। आत्मनेपदपरकत्वात् सनो नेट्।
A. 'रावणः शुश्रुवान् शक्रम् राक्षसानभ्युपेयुषः। स्वयं युयुत्सयापक्षे प्राकाराग्रे निषेदिवान् ॥' भ. का. 14-22.
B. 'निवृत्ते भरते धीमान् अथ रामस्तपोवनम्। प्रपेदे पूजितस्तस्मिन् दण्डकारण्यमीयिवान् ॥' भ. का. 4-1.
C. 'आहारमत्येन कृत्येन स्तुत्यो शुश्रूषया सतः। इत्यः शिष्येण गुरुवत् पूज्यमर्घंगवा- प्रमसि' भ. का. 6-65.

आयः, [A]न्यायः[1], [2]पर्यायः,[B] [3]अध्यायः, समयः,[4] अन्वयः, उदयः, न्ययः, व्ययः, [C]अभ्युदयः, न्यायः[5] अवगमः, प्रत्यायः ;

एतुम्, प्रत्याययितुम्, गमयितुम्, जिगमिषितुम्, प्रतीषिषितुम् ;

[6]इत्या, अपीतिः, [7]समितिः, इतिः, समित्[8], प्रत्यायना, अवगमना, जिगमिषा, जिगमयिषा, प्रतीषिषा, प्रत्याययिषा ;

अयनम्, [9]अन्तरयणम् (वर्तते), अन्तरयनो (देशः), प्रत्यायनम्, अवगमनम्, जिगमिषणम्, प्रतीषिषणम् ;

इत्वा, आययित्वा, गमयित्वा, जिगमिषित्वा, ईषिषित्वा ;

उपेत्य-परीत्य, प्रत्याय्य, [10]अवगमय्य, अवजिगमिष्य, प्रतीषिष्य ;

---

1. संज्ञायाम् 'अध्यायन्याय—' (3-3-122) इत्यादिना घापवादो घञ् निपातितः। न्याय इति शास्त्रस्य संज्ञा। न्येति—निश्चिनोति इति शास्त्रयुक्त्यादिरत्र न्यायः। न अभ्रेषः।
2. 'परावनुपात्यय इणः' (3-3-38) इति अजपवादो घञ्। क्रमस्यानतिक्रमोऽनुपात्ययः।
3. 'अध्यायन्याय—' (3-3-122) इत्यादिना घापवादो घञ् निपातितः। संज्ञायाम्
4. 'एरच्' (3-3-56) इति भावेऽच्। एवं 'अभ्युदय' इति यावदच् प्रत्ययः।
5. 'परिन्योर्नीणोर्द्यूताभ्रेषयोः' (3-3-37) इति घञ्। अभ्रेषोऽस्खलनम्। न्याये स्थितः।
6. 'संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः' (3-3-99) इति स्त्रियां भावे क्यप्।
7. बाहुलकात् क्तिन्नपि—इत्यात्रेयः। समितिः = सभा।
8. 'संपदादित्वात्—'(3-3-94) स्त्रियां भावादौ क्विप्। समित् = युद्धः।
9. 'अयनं च' (8-4-25) इत्यदेशे णत्वम्। देशविशेषे तु न—अन्तरयनो देशः। 'अन्तश्शब्दस्याङ्किविधिणत्वेषु उपसर्गत्वं वक्तव्यम्' (वा. 1-4-58) इति वचनात् उपसर्गत्वम्। 'कृत्यच' (8-4-29) इत्यनेनैव सिद्धे, देशे णत्वाभावाय 'अयनं च' (8-4-25) इति सूत्रारम्भः।
10. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः।

A. 'नरकस्यावतारोऽयं प्रत्यक्षोऽस्माकमागतः। अचेष्टा यदिहान्यायात् अनेनास्यामहे वयम्॥' भ. का. 7-82.

B. 'न्याय्यं यदत्र तत् कार्यं पर्यायेणाविरोधिभिः। निशोपशायः कर्तव्यः फलोच्चायश्च संहतैः॥' भ. का. 7-41.

C. 'निराकरिष्णुर्द्विजकुञ्जराणां तृणीकृताशेषगुणोऽतिमोहात्। पापाशयान् अभ्युदयार्थमाप्स्यत् प्रागुत्थरक्षःप्रवरान् दशास्यः॥' भ. का. 11-44.

| | | | |
|---|---|---|---|
| आयम् २, इत्वा २, | प्रत्यायम् २, आययित्वा २, | [1]अवगमम् २ अवगामम् २ | गमयित्वा २, |
| — | — | जिगमिषम् २, | प्रतीषिषम् २ ; |
| — | — | जिगमिषित्वा २, | ईषिषित्वा २ ; |

## (69) " इदि परमैश्वर्ये " (I-भ्वादिः-63-अक. से. पर.)

परमैश्वर्यम्=परमेश्वरक्रिया-इति क्षीरस्वामी ।

| | | | |
|---|---|---|---|
| इन्दकः-दिका, | इन्दकः-दिका, | [2]इन्दिदिषकः-षिका ; | |
| इन्दिता-ती, | इन्दयिता-त्री, | इन्दिदिषिता-त्री ; | |
| इन्दन्-न्ती, | इन्दयन्-न्ती, | इन्दिदिषन्-न्ती ; | |
| इन्दिष्यन्-न्ती-ती, | इन्दयिष्यन्-न्ती-ती, | इन्दिदिषिष्यन्-न्ती-ती ; | |
| — | इन्दयमानः, | इन्दयिष्यमाणः ; | — |
| इन्-इन्दौ-इन्दः ; | — | — | |
| इन्दितम्-तः-तवान्, | इन्दितः, | इन्दिदिषितः-तवान् ; | |
| इन्दः, | इन्दः, | इन्दिदिषुः, इन्दिदयिषुः ; | |
| [A][3]इन्द्रः-इन्द्राणी, | [4]इन्दिरा ; | — | |
| इन्दितव्यम्, | इन्दयितव्यम्, | इन्दिदिषितव्यम् ; | |
| इन्दनीयम्, | इन्दनीयम्, | इन्दिदिषणीयम् ; | |
| इन्द्यम्, | इन्द्यम्, | इन्दिदिष्यम् ; | |
| ईषदिन्दः, दुरिन्दः, स्विन्दः ; | | — | |
| इन्द्यमानः, | इन्द्यमानः, | इन्दिदिष्यमाणः ; | |
| इन्दः, | इन्दः, | इन्दिदिषः ; | |
| इन्दितुम्, | इन्दयितुम्, | इन्दिदिषितुम् ; | |

---

1. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-1-93) इति णमुलि दीर्घविकल्पः ।
2. 'न न्द्राः संयोगादयः' (6-1-3) इति नकारस्य द्वित्वनिषेधः ।
3. औणादिके (द. उ. 8-40) रन् प्रत्यये रूपम्। स्त्रियां पुंयोगे 'इन्द्रवरुण-' (4-1-49) इत्यादिना ङीष्, तत्संनियोगेनानुगागमश्च भवति ।
4. औणादिके किरच् प्रत्यये रूपम् ।

A. 'अतर्दकास्त्वत्र विकर्दमाशयाः प्रतर्दयन्तोऽसमन्तितान्तिकाः ।
पुरान्दुकैः चितणजेन्द्ररोधिरः तुरन्तु सन्तो गुणबिन्दुलेऽत्राः ॥' भा. का. 1-9.

| | | |
|---|---|---|
| इन्दा, | इन्दना, | इन्दिदिषा ; |
| इन्दनम्, | इन्दनम्, | इन्दिदिषणम् ; |
| इन्दित्वा, | इन्दयित्वा, | इन्दिदिषित्वा ; |
| समिन्द्य, | समिन्द्य, | इमिन्दिदिष्य ; |
| इन्दम् २, इन्दित्वा २, | इन्दम् २, इन्दयित्वा २, | इन्दिदिषम् २ ; इन्दिदिषित्वा २, |

(70) "ञि इन्धी दीप्तौ" (VII-रुधादिः-1548-अक. से. आ.)

दीपनायामपि प्रयुज्यते ।

| | | |
|---|---|---|
| इन्धकः-न्धिका, | इन्धकः-न्धिका, | इन्दिधिषकः-षिका ; |
| इन्धिता-त्री, | इन्धयिता-त्री, | इन्दिधिषिता-त्री ; |
| — | इन्धयन्-न्ती, | इन्धयिष्यन्-न्ती-ती ; |
| [1]इन्धानः, [A]समिन्धानः, | इन्धयमानः, | इन्दिधिषमाणः ; |
| इन्धिष्यमाणः, | इन्धयिष्यमाणः, | इन्दिधिषिष्यमाणः ; |
| [2]समिध्-समिधौ-समिधः; | — | — |

अग्नीध्[3], आग्निमिन्धः[4], अग्निमिन्धः, इन्धः, इन्धनम्[B] इन्दिधिषुः, इन्दिधयिषुः;

समिद्धम्, इद्धः[5], [C]इद्धवान्, इन्धितम्-तः-तवान्, इन्दिधिषितः-तवान् ;

| | | |
|---|---|---|
| इन्धितव्यम्, | इन्धयितव्यम्, | इन्दिधिषितव्यम् ; |
| इन्धनीयम्, | इन्धनीयम्, | इन्दिधिषणीयम् ; |
| इन्ध्यम्, | इन्ध्यम्, | इन्दिधिष्यम् ; |
| ईषदिन्धः, दुरिन्धः, स्विन्धः ; | | — |

1. 'रुधादिभ्यः श्नम्' (3-1-78) इति श्नमि 'श्नसोरल्लोपः' (6-4-23) इति नलोपे 'श्नसोरल्लोपः' (6-4-111) इति अकारलोपः ।
2. 'अनिदितां-'(6-4-24) इति नलोपः ।
3. 'क्विप् च' (3-2-76) इति कर्मणि उपपदे क्विप् ।
4. 'कर्मण्यण्' (3-2-1) इत्यण्, 'खा-प्राग्न्योः—'(वा. 6-3-70) इति मुम् ।
5. 'ञीतः क्तः' (3-2-187) इति वर्तमाने क्तः । 'श्वीदितो निष्ठायाम्' (7-2-14) इतीडभावः ।

A. 'यमं युनज्मि का न समिन्धानोऽस्त्रकौशलम् ।' भ. का. 6-37.
B. 'अपां पतिर्नित्यमपीन्धनेन ज्वालावता नूनमशोषिणोऽभूत् ।' याद वाभ्युदये 18-45.
C. "समिद्धशरणा दीप्ता देहे लङ्का मतेश्वरा । समिद्धशरणाऽऽदीप्ता देहेऽलङ्कमतेश्वरा ॥" भ. का. 10-7.

| | | |
|---|---|---|
| इद्ध्यमानः, | इन्ध्यमानः, | इन्दिधिष्यमाणः ; |
| एधः[1], | इन्धः, | इन्दिधिषः ; |
| इन्धितुम्, | इन्धयितुम्, | इन्दिधिषितुम् ; |
| इन्धा, समित्[2], | इन्धना, | इन्दिधिषा, इन्दिधयिषा ; |
| इन्धनम्, | इन्धनम्, | इन्दिधिषणम् ; |
| इन्धित्वा, | इन्धयित्वा, | इन्दिधिषित्वा ; |
| समिध्य, | समिन्ध्य, | समिन्दिधिष्य ; |
| इन्धम् २, इन्धित्वा २, | इन्धम् २, इन्धयित्वा २, | इन्दिधिषम् २ ; इन्दिधिषित्वा २. |

## (71) "इल स्वप्नक्षेपणयोः" (VI-तुदादिः-1357-सक. सेट्. पर.)

'— स्वप्नप्रेरणयोः' इति धातुकाव्ये पाठः।

| | | |
|---|---|---|
| एलकः-लिका, | एलकः-लिका, | [3]एलिलिषकः-षिका ; |
| एलिता-त्री, | एलयिता-त्री, | एलिलिषिता-त्री ; |
| [4]इलन्[A5]-न्ती-ती, | एलयन्-न्ती, | एलिलिषन्-न्ती ; |
| एलिष्यन्-न्ती-ती, | एलयिष्यन्-न्ती-ती, | एलिलिषिष्यन्-न्ती-ती ; |
| — | एलयमानः, एलयिष्यमाणः ; | — |
| इल्-इलौ-इलः ; | — | — |
| इलितम्-तः-तवान्, | एलितम्-तः, | एलिलिषितम्-तः-तवान् ; |
| [6]इलः, इला, एलः, | एलिलिषुः, | एलिलयिषुः ; |
| एलितव्यम्, | एलयितव्यम्, | एलिलिषितव्यम् ; |

---

1. 'अवोदैधौद्म—' (6-4-29) इति घञन्तो निपातितः। इध्म इत्यर्थः।
2. 'संपदादिभ्यः—' (वा. 3-3-94) इति क्विप् स्त्रियां भावादौ। युद्ध इत्यर्थः।
3. उपधाकार्यस्य द्वित्वात् प्रबलत्वात् पूर्वं गुणे द्वितीयस्यैकाचः द्वित्वम्।
4. 'तुदादिभ्यः शः' (3-1-77) इति शः। 'सार्वधातुकमपित्' (1-2-4) इति शस्य ङिद्वद्भावाल्लघूपधगुणो न।
5. 'आच्छीनद्योर्नुम्' (7-1-80) इति नुम् विकल्पेन।
6. 'इगुपधज्ञाप्रीकिरः कः' (3-1-135) इति कर्तरि कः। टाप् स्त्रियाम्। इला = भूमिः।

A. 'चिलितपीतपटेन चलन् इलन् अविलितोरुकृपां परितो दृशम्॥' धा. का. 2-78.

| | | |
|---|---|---|
| एलनीयम्, | एलनीयम्, | एलिलिषणीयम्; |
| एल्यम्, | एल्यम्, | एलिलिष्यम्; |
| ईषदेलः, दुरेलः, स्वेलः; | — | — |
| इल्यमानः, | एल्यमानः, | एलिलिष्यमाणः; |
| एलः, | एलः, | एलिलिषः; |
| एलितुम्, | एलयितुम्, | एलिलिषितुम्; |
| इलितः-[1]इलितिः, | एलना, | एलिलिषा, एलिलयिषा; |
| एलनम्, | एलनम्, | एलिलिषणम्; |
| [2]एलित्वा, | एलयित्वा, | एलिलिषित्वा; |
| समिल्य, | समेल्य, | समेलिलिष्य; |
| एलम् २, एलित्वा २, | एलम् २, एलयित्वा २, | एलिलिषम् २; एलिलिषित्वा २. |

(72) "इल प्रेरणे" (X-चुरादिः-1661-सक. सेट्. उभ.)

पूर्वोक्ततौदादिकेलतिवत् (71) णिजन्तात् रूपाणि सर्वाणि ज्ञेयानि। ण्यन्तात् पचाद्यचि टापि एला-बहुलगन्धा, जलसंस्कारकफलविशेषः। द्राविड्यां ['ஏலக்காய்']'एलकाय्' इति प्रसिद्धः।

| | |
|---|---|
| एलिलयिषकः-षिका; | एलिलयिष्यमाणः; |
| एलिलयिषिता-त्री; | एलिलयिषुः; |
| एलिलयिषन्-न्ती; | एलिलयिषः; |
| एलिलयिषिष्यन्-न्ती-ती; | एलिलयिषितुम्; |
| एलिलयिषमाणः; | एलिलयिषा; |
| एलिलयिषिष्यमाणः; | एलिलयिषणम्; |
| एलिलयिषितः-तवान्; | एलिलयिषित्वा; |
| एलिलयिषितव्यम्; | समेलिलयिष्य; |
| एलिलयिषणीयम्; | एलिलयिषम् २; एलिलयिषित्वा २; इत्यादिरूपाणि-इति विशेषः। |
| एलिलयिष्यम्; | |

1. इलितिरित्यत्र 'तितुत्रथसिसुसरकसेषु च' (7-2-9) इति पर्युदासादिट् भवति।
2. 'न क्त्वा सेट्' (1-2-18) इति किर्त्वं न, तेन गुणः।

## (73) "इवि व्याप्तौ" (I-भ्वादिः-587. अक. सेट्-पर.)

| | | |
|---|---|---|
| इन्वकः-न्विका, | इन्वकः-न्विका, | [1]इन्विविषकः-षिका ; |
| इन्विता-त्री, | इन्वयिता-त्री, | इन्विविषिता-त्री ; |
| प्रेन्वन्-न्ती, | इन्वयन्-न्ती , | इन्विविषन्-न्ती ; |
| इन्विष्यन्-न्ती-ती, | इन्वयिष्यन्-न्ती-ती, | इन्विविषिष्यन्-न्ती-ती ; |
| — | इन्वयमानः, | इन्वयिष्यमाणः ; |
| इन्-इन्वौ-इन्वः ; | — | — |
| [A]इन्वितम्-तः-तवान् , | इन्वितः-तम्, | इन्विविषितम्-तः-तवान् ; |
| इन्वः, इन्वका,[2] | इन्विविषुः , | इन्विवयिषुः ; |
| इन्वितव्यम् , | इन्वयितव्यम् , | इन्विविषितव्यम् ; |
| इन्वनीयम् , | इन्वनीयम् , | इन्विविषणीयम् ; |
| इन्व्यम् , | इन्व्यम् , | इन्विविष्यम् ; |
| ईषदिन्वः, दुरिन्वः, स्विन्वः ; | | — |
| इन्व्यमानः, | इन्व्यमानः, | इन्विविष्यमाणः ; |
| इन्वः, | इन्वः , | इन्विविषः ; |
| इन्वितुम् , | इन्वयितुम् , | इन्विविषितुम् ; |
| इन्वा, | इन्वना, | इन्विविषा ; |
| इन्वनम् , [3]प्रेन्वनम् , | इन्वनम् , | इन्विविषणम् ; |
| इन्वित्वा, | इन्वयित्वा, | इन्विविषित्वा ; |
| समिन्व्य, | समिन्व्य, | समिन्विविष्य ; |
| इन्वम् २, इन्वित्वा २, | इन्वम् २, इन्वयित्वा २, | इन्विविषम् २ ; इन्विविषित्वा २. |

## (74) " इष गतौ " (IV-दिवादिः-1127-सक. सेट्. पर.)

' इष्णात्यामीक्ष्ण्ये, इच्छायामिच्छेद्, गत्यर्थ इष्यति ।' (श्लो 168)

इति देवः ।

| | | |
|---|---|---|
| एषकः-षिका, | एषकः-षिका, | [1]एषिषिषकः-षिका ; |
| [2]एषिता-त्री, | एषयिता-त्री, | एषिषिषिता-त्री ; |
| [3]इष्यन्-न्ती, | एषयन्-न्ती, | एषिषिषन्-न्ती ; |
| एषिष्यन्-न्ती-ती, | एषयिष्यन्-न्ती-ती ; | एषिषिषिष्यन्-न्ती-ती ; |
| — | एषयमाणः, | एषयिष्यमाणः ; |
| इट्-इषौ-इषः ; | — | — |
| इषितम्-[A]तः-तवान्, | एषितम्-तः, | एषिषिषितः-तवान् ; |
| [4]इषः, एषः, प्रैषः[5], | एषिषिषुः, | एषिषयिषुः ; |
| एषितव्यम्, | एषयितव्यम्, | एषिषिषितव्यम् ; |
| एषणीयम्, | एषणीयम्, | एषिषिषणीयम् ; |
| एष्यम्, [B]प्रैष्यः, | एष्यम्, | एषिषिष्यम् ; |
| ईषदेषः, दुरेषः, स्वेषः ; | — | — |
| इष्यमाणः, | एष्यमाणः, | एषिषिष्यमाणः ; |
| एषः, | एषः, | एषिषिषः ; |
| [A]एषितुम्, | एषयितुम्, | एषिषिषितुम् ; |
| [6]एषणा, [7]परीष्टिः-पर्येषणा, अन्वेषणा, | | एषिषिषा, एषिषयिषा ; |

1. ओणेर्ऋदित्करणात् उपधाकार्यं प्रबलम् । एवं लघूपधगुणे द्वितीयस्यैकाचः 'षिस्' इत्यस्य द्वित्वम् ।
2. 'तीषसह—' (7-2-48) इतीड्विकल्पस्तु नात्र प्रवर्तते, 'इषेस्तकारे श्यन्प्रत्ययात् प्रतिषेधो वक्तव्यः' (वा. 7-2-48) इति वार्तिकात् ।
3. 'दिवादिभ्यः श्यन्' (3-1-69) इति श्यन् । श्यनः ङिद्वद्भावात् गुणो न ।
4. 'इगुपधज्ञा—' (3-1-135) इति कर्तरि कः ।
5. 'प्रादूहोढोढ्येषैष्येषु' (वा. 6-1-89) इति वृद्धिः ।
6. 'इषेरनिच्छार्थस्य' (वा. 3-3-107) इति युच् ।
7. 'परेर्वा' (वा. 3-3-107) इति युच् वा ।

A. 'एषितुं प्रेषितो दूतो मया तस्यानुजो वनम् ॥' भ. का. 6-82.
B. 'इहेह भर्तः प्रेष्य मुनेऽद्य मे ... ॥' भ. का. 2-57.

| | | |
|---|---|---|
| एषणम्, | एषणम्, | एषिषिषणम्; |
| [1]एषित्वा, | एषयित्वा, | एषिषिषित्वा; |
| प्रेष्य, | प्रेष्य, | समेषिषिष्य; |
| एषम् २, एषित्वा २, | एषम् २, एषयित्वा २, | एषिषिषम् २; एषिषिषित्वा २. |

(75) "इष इच्छायाम्" (VI-तुदादिः-1351-सक. सेट्. पर.) (अ)

'इष्णात्याभीक्ष्ण्ये, इच्छायां इच्छेद्, गत्यर्थे इष्यति ।' (168 श्लो) इति देवः ।

| | |
|---|---|
| एषकः-षिका, [2]एषिषिषकः-षिका; | एष्टव्यम्, एषितव्यम्; |
| [3]एष्टा-ष्ट्री, [A]एषिता-त्री; | |
| [4]इच्छन्-[B]न्ती-ती; | एषणीयम्; |
| एषिष्यन्-न्ती-ती, | एष्यम्; |
| [5]इट्-इड्-इषौ-इषः; | ईषदेषः-दुरेषः-स्वेषः; |
| [6]इष्टः-ष्टम्-ष्टवान्; | इष्यमाणः; |
| इषः, एषः, एषिषिषुः, [7]इच्छुः[C]; [8]शरणैषी[D] | एषः; एष्टुम्—एषितुम्; |

1. 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधाद्गुणः ।
(अ) केचिदमुं धातुमुदितं पठन्ति । तत्फलं तु क्त्वायामिड्विकल्प इति वक्तव्यम् । 'इषेस्तकारे श्यन्प्रत्ययात् प्रतिषेधो वक्तव्य' इति भाष्यात् तकारादावार्धधातुके इड्विकल्पः सिद्ध एवेत्यत उदित्त्वस्य फलं न ।
2. सनि, णौ च पूर्वोक्तेषि (74) धातुवद्रूपाणि ज्ञेयानि ।
3. 'तीषसह—' (7-2-48) इति तादेरार्धधातुकस्य इड्विकल्पः ।
4. 'इषुगमियमां छः' (7-3-77) इति शे परे छकार आदेशः ।
5. 'झलां जशोऽन्ते' (8-2-39) इति जश्त्वम् । चर्त्वविकल्पः ।
6. 'यस्य विभाषा' (7-2-15) इतीण्णिषेधः ।
7. 'विन्दुरिच्छुः' (3-2-169) इति वन्द्योलादिषु उप्रत्ययः छकारश्च निपातितः ।
8. 'सुप्यजातौ—' (3-2-78) इति णिनिः ।
A. 'एष्टारमेषिता संख्ये सोढारं सहिता मृधम् ।' भ. का. 9-31.
B. "सुरादिबन्धुः सुरघोरचेष्टाः पुरन् सन्तानां जनजीवनहीं । कंसः स्थितो यत्र तदर्हं लोकं स्तुवामरार्दनकरानमीच्छन् ॥" धा. का. 2-77.
C. 'इच्छुः प्रसादं प्रणमन् सुग्रीवः प्रावदत् नृपम् ॥' भ. का. 7-24.
D. 'अन्वासितं श्रिया मञ्जया शरण्यं शरणैषिणाम् ॥' भ. का. 4-4.

इष्टि[1]:, [A]इच्छा[2] ;
एषणम् , एषणी[3] ;
एषित्वा ;
इष्टा ;

प्रेष्य ;
एषम् २, [A]एषित्वा २, इष्ट्वा २,
इष्टका[4].

(76) " इष आभीक्ष्ण्ये " (IX - क्रयादिः-1525. सक. सेट्. पर.)

'इष्णात्याभीक्ष्ण्ये, इच्छायां इच्छेद् , गत्यर्थ इष्यति ।' (श्लो. 168) इति देवः ।

'इषेस्तकारे श्यन्प्रत्ययात् प्रतिषेधो वक्तव्य' (वा. 7-2-48) इति वचनात् अस्यापि धातोः तादेरार्द्धधातुकस्य इड्विकल्पः । तदानीं शुद्धाद्धातोः (75) इच्छार्थकधातुवत् , ण्यन्तात् सन्नन्ताच्च (74) इषधातुवच्च रूपाणि ज्ञेयानि । शतरि परं—इष्णन्-ती ('क्र्यादिभ्यः श्ना' (3-1-81) इति श्नाप्रत्ययः । 'श्नाभ्यस्तयोरातः' (6-4-112) इति आकारलोपे रूपम्) इति विशेषः । आभीक्ष्ण्यं=पौनःपुन्यम्, भृशार्थो वा । तद्विषयायां क्रियायामित्यर्थः ।

(77) " ई (वी) गतिव्याप्तिप्रजनकान्त्यसनखादनेषु "

(II-अदादिः-1048 - स. अनि. पर.)

'अयत्येतीयते गत्यां, अधीतेऽध्येति चेङिकोः ।' (श्लो 14) इति देवः । प्रजनम्=गर्भग्रहणम् । 'वी गति—' (II-1048. सक. अनि. पर.) इति धातौ प्रश्लिष्टोऽयं धातुः ।

| | | |
|---|---|---|
| आयकः-यिका, | आयकः-यिका, | [5]ईयिषकः-षिका ; |
| एता-त्री, | आययिता-त्री, | ईयिषिता-त्री ; |
| [6]इयन्[B]-ती, | आययन्-न्ती, | ईयिषन्-न्ती ; |

1. 'श्रुयजीषिस्तुभ्यः करणे' (वा 3-3-94) इति क्तिन्। बाहुलकाद्भावेऽपीष्टिरिति ।
2. 'इच्छा' (3-3-101) इति भावे शे यगभावो निपात्यते ।
3. करणे ल्युटि स्त्रियां ङीप् । तुलना ।
4. 'इष्यशिभ्यां तकन्' (द. उ. 3- 30) इति तकन् प्रत्ययः । इष्यते श्रेयोऽर्थिभिरिति विग्रहः ।
5. 'इको झल्' (1-2-9) इति सनः कित्त्वम् । 'पर्जन्यवल्लक्षणं प्रवर्तते' (भाष्यम्) इति न्यायात् 'अज्झनगमां सनि' (6-4-16) इति दीर्घः ।
6. 'अचि श्नुधातु—' (6-4-77) इतीयङ् ।

A. 'निरचिक्रमदिच्छातः सानरोधस्क्रमात्मनः ॥' भ. का. 7-70.
B. 'इयदन्नमं राजरथं समायान् शताङ्कुलोद्भासनाच्मोशः ॥' ध. का. 2-49.

| | | |
|---|---|---|
| एष्यन्-न्ती-ती, | आययिष्यन्-न्ती-ती, | ईषिषिष्यन्-न्ती-ती ; |
| — | आययमानः, | आययिष्यमाणः ; |
| ईः—इयौ-इयः ; | — | — |
| [A]ईतः-तम्-तवान्, | आयितम्-तः, | ईषिषितः-तवान् ; |
| अयः, आयः, | ईषिषिषुः, | आयिययिषुः ; |
| एतव्यम्, | आययितव्यम्, | ईषिषितव्यम् ; |
| अयनीयम्, | आयनीयम्, | ईषिषणीयम् ; |
| एयम्, उपेयम्[B], | आय्यम्, | ईषिष्यम् ; |
| ईषदयः, दुरयः, स्वयः ; | — | — |
| ईयमानः, | आय्यमानः, | ईषिष्यमाणः ; |
| अयः, | आयः, | ईषिषः ; |
| एतुम्, | आययितुम्, | ईषिषितुम् ; |
| ईतिः, | आयना, | ईषिषिषा ; आयिययिषा ; |
| अयनम्, | आयनम्, | ईषिषणम् ; |
| ईत्वा, | आययित्वा, | ईषिषित्वा ; |
| समीय-प्रतीय,[C] | समाय्य, | समीषिष्य ; |
| आयम् २, ईत्वा २, | आयम् २, आययित्वा २, | ईषिषम् २ ; ईषिषित्वा २. |

(78) " ईक्ष दर्शने " (I-भ्वादिः-610. सक. सेट्. आत्म.)

| | | |
|---|---|---|
| ईक्षकः-क्षिका, | ईक्षकः-क्षिका, | [1]ईचिक्षिषकः-षिका ; |
| ईक्षिता-त्री, | ईक्षयिता-त्री, | ईचिक्षिषिता-त्री ; |
| — | ईक्षयन्-न्ती, | ईक्षयिष्यन्-न्ती-ती ; |

1. 'कुहोश्चुः' (7-4-62) इत्यभ्यासस्य चुत्वम् ।

A. 'इदं वचोऽनुचरमेत्य ईते तस्मिन् सनातनविधिं निवेद्यन् ।' वासुदेवविजये — 2-20. ईते इति क्तान्तात् सप्तमी ।

B. 'ई गताविति धातोर्यत्, तस्मादेवमिति स्थिते । 'एङि' ति पररूपे स्यादुपेयमिति न त्विषः ॥' इति प्रक्रियासर्वस्वे (पृ. ९०)-

C. 'प्रतीय सा पूर्वदले जनेन दौर्भाग्यशोकाकुलितेव कृतेव । राजन्यवक्त्रसमन्वितेऽपि शोकान्धकारस्तमसर्गवेला ॥' म. क. 3-19.

| | | |
|---|---|---|
| [1]कृष्णाय ईक्षमाणः,[A] | ईक्षयमाणः, | ईचिक्षिषमाणः ; |
| ईक्षिष्यमाणः, | ईक्षयिष्यमाणः, | ईचिक्षिषिष्यमाणः ; |
| [2]ईट्-ईक्षौ-ईक्षः ; | — | — |
| ईक्षितः-तं-तवान्, | ईक्षितः, | ईचिक्षिषितः-तवान् ; |
| ईक्षः, प्रतीक्षः, प्रेक्षी[3], [4]भरतप्रतीक्षः-[B]क्षा, [C]अवसरप्रतीक्षः, ईचिक्षिषुः, ईचिक्षयिषुः; | | |
| ईक्षितव्यम्, | ईक्षयितव्यम्, | ईचिक्षिषितव्यम् ; |
| ईक्षणीयम्, | ईक्षणीयम्, | ईचिक्षिषणीयम् ; |
| ईक्ष्यम्, | ईक्ष्यम्, | ईचिक्षिष्यम् ; |
| ईषदीक्षः-दुरीक्षः-स्वीक्षः; | — | — |
| ईक्ष्यमाणः, | ईक्ष्यमाणः, | ईचिक्षिष्यमाणः ; |
| ईक्षः, व्यतीक्षा[5], | ईक्षः | ईचिक्षिषः ; |
| ईक्षितुम्, | ईक्षयितुम्, | ईचिक्षिषितुम् ; |
| ईक्षा, परीक्षा, | ईक्षणा, | ईचिक्षिषा, ईचिक्षयिषा ; |
| ईक्षणम्, | ईक्षणम्, | ईचिक्षिषणम् ; |
| ईक्षित्वा, | ईक्षयित्वा, | ईचिक्षिषित्वा ; |
| [D]प्रेक्ष्य-परीक्ष्य, | समीक्ष्य, | समीचिक्षिष्य ; |
| ईक्षम् २, ईक्षित्वा २, | ईक्षम् २, ईक्षयित्वा २, | ईचिक्षिषम् २ ; ईचिक्षिषित्वा २. |

1. 'राधीक्ष्योर्यस्य विप्रश्नः' (1-4-39) इति कृष्णस्य सम्प्रदानसंज्ञा ।
2. 'स्कोः' (8-2-29) इति कलोपः ।
3. 'सुप्यजातौ णिनिः-' (3-2-78) इति ताच्छील्ये णिनिः ।
4. 'ईक्षिक्षमिभ्यां च' (वा. 3-2-1) इति कर्मण्युपपदे णः । टाप् ।
5. कर्मव्यतीहारे विवक्षितेऽपि अभिधानस्वाभाव्यात् अत्र णच् नेष्ट इति स्पष्टं भाष्ये (3-3-43) ।

A. 'वीक्षमाणो मृगं रामः चित्रवृत्तिं विसिष्मिये ॥' (भ. का. 5-51) । 'स्तुतिशीला हरिकामा फलभक्षा कानने व्रताचारा। तदुपग्रहप्रतीक्षा वसति द्वन्द्वसमा मुनिश्रेणी ॥' इति प्रक्रियासर्वस्वे ।
B. 'ताः सान्त्वयन्ती भरतप्रतीक्षा तं बन्धुता न्यक्षिपदाशु तेजे ।' (भ. का. 3-23) ।
C. 'आसीत राजावसरप्रतीक्षः तदा प्रयाणं वितथं न कुर्यात् ॥' (भ. का. 12-29) ।
D. 'सङ्क्लेशितस्वकपदक्षणदीक्षितं तं प्रेक्ष्यैव जन्मफलमीप्सितवान् महात्मा ॥' (धा. का. 1-77) ।

(79) " ईखि गतौ " (I-भ्वादिः-142-सक. से.-पर.)

ईङ्खकः-खिका, ईङ्खकः-ङ्खिका, ईञ्चिखिषकः-षिका, ईखिता, ईङ्खयिता, ईञ्चिखिपिता-त्री-ईङ्खन्[A]-न्ती; इत्यादिकं सर्वं 'इखि गतौ' (64) इति धातुवत् ज्ञेयम्।

(80) " ईङ् गतौ " (IV-दिवादिः-1143-सक. अनि-आत्म-)

'अयत्येतीयते गत्यां, अधीतेऽध्येति चेङिकोः।' (श्लो-14) देवः।

ईयमानः, एष्यमाणः, आययमानः, आययिष्यमाणः, ईषिषमाणः, ईषिषिष्यमाणः; इति-शानचि रूपाणि। [B]निरीतः, अन्यानि सर्वाण्यपि 'ई' धातुवत् (77) रूपाणि ज्ञेयानि।

(81) " ईज गतिकुत्सनयोः " (I-भ्वादिः-182-सक-सेट्-आत्म.)

| | | |
|---|---|---|
| ईजकः-जिका, | ईजकः-जिका, | ईजिजिषकः-षिका; |
| ईजिता-त्री, | ईजयिता-त्री, | ईजिजिषिता-त्री; |
| — | ईजयन्-न्ती, | ईजयिष्यन्-न्ती-ती; |
| ईजमानः, | ईजयमानः, | ईजिजिषमाणः; |
| ईजिष्यमाणः, | ईजयिष्यमाणः, | ईजिजिषिष्यमाणः; |
| ईक्-ईजौ-ईजः; | — | — |
| [C]ईजितम्-तः-तवान्, | [1]ईजितः, | ईजिजिषितः-तवान्; |
| ईजः, | ईजः, | ईजिजिषुः, ईजिजयिषुः; |
| ईजितव्यम्, | ईजयितव्यम्, | ईजिजिषितव्यम्; |
| ईजनीयम्, | [2]ईजनीयम्, | ईजिजिषणीयम्; |
| [3]ईज्यम्, | ईज्यम्, | ईजिजिष्यम्; |

1. 'निष्ठायां सेटि' (6-4-52) इति णेर्लोपः।
2. 'णेरनिटि' (6-4-51) इति णेर्लोपः।
3. निष्ठायां सेट्त्वात् 'चजोः—' (7-3-52) इति कुत्वं न।

A. 'एखचकोरोत्करमिङ्खितं शुकैः प्रेङ्खल्लतावल्लनरम्यमण्डपम्।' (धा. का. 1-20)।

B. 'आपीय तद्गिरममाननिरीतरोषः प्रीतिं स्यतोऽस्य स करेण शिरोधिमच्छात्।' (धा. का. 2-59)।

C. 'अभ्रेजि विभ्रामिरनीजितेव यत् कदाप्यशोचद्भिरशेषजन्तुभिः।' धा. का. 1-25.

| | | |
|---|---|---|
| ईषदीजः, दुरीजः, स्वीजः ; | — | — |
| ईज्यमानः, | ईज्यमानः, | ईजिजिष्यमाणः ; |
| ईजः, | ईजः, | ईजिजिषः ; |
| ईजितुम्, | ईजयितुम्, | ईजिजिषितुम् ; |
| ईजा, | ईजना, | ईजिजिषा, ईजिजयिषा ; |
| ईजनम्, | ईजनम्, | ईजिजिषणम् ; |
| ईजित्वा, | ईजयित्वा, | ईजिजिषित्वा ; |
| समीज्य, | समीज्य, | समीजिजिष्य ; |
| ईजम् २, ईजित्वा २, | ईजम् २, ईजयित्वा २, | ईजिजिषम् २ ; ईजिजिषित्वा २. |

(82) "ईड स्तुतौ" (II-अदादिः-1019. सक. से. आत्म.)

'—स्तुत्यामीड्टे तत्रेडयेण्णिचि ।' (श्लो-84) इति देवः ।

| | | |
|---|---|---|
| ईडकः-डिका, | ईडकः-डिका, | ईडिडिषकः-षिका ; |
| ईडिता-त्री, | ईडयिता-त्री, | ईडिडिषिता-त्री ; |
| — | ईडयन्-न्ती, | ईडयिष्यन्-न्ती-ती ; |
| ईडानः, | ईडयमानः, | ईडिडिषमाणः ; |
| ईडिष्यमाणः, | ईडयिष्यमाणः, | ईडिडिषिष्यमाणः ; |
| ईट्-ईडौ-ईडः ; | — | — |
| ईडितः-तं-तवान्, | ईडितः-तं, | ईडिडिषितः-तवान् ; |
| ईडः, | ईडः, | ईडिडिषुः, ईडिडयिषुः ; |
| ईडितव्यम्, | ईडयितव्यम्, | ईडिडिषितव्यम् ; |
| ईडनीयम्, | ईडनीयम्, | ईडिडिषणीयम् ; |
| [A]ईड्यम्, | ईड्यम्, | ईडिडिष्यम् ; |
| ईषदीडः, दुरीडः, स्वीडः ; | | — |
| ईड्यमानः, | ईड्यमानः, | ईडिडिष्यमाणः ; |
| ईडः, | ईडः, | ईडिडिषः ; |
| ईडितुम्, | ईडयितुम्, | ईडिडिषितुम् ; |

A. 'ईड्योऽयमीशः समुपास्तिशीलैराशासितः पीतपटीं वसानः । स्वीयेऽचकंसे कश-नीयकाधी रमोद्घर्निसी नतचित्तनिघ्नो ॥' धा. का. 2-45.

| | | |
|---|---|---|
| ईडा[1], | ईडना, | ईडिडिषा, ईडिडयिषा ; |
| ईडनम्, | ईडनम्, | ईडिडिषणम् ; |
| ईडित्वा, | ईडयित्वा, | ईडिडिषित्वा ; |
| समीड्य, | समीड्य, | समीडिडिष्य ; |
| ईडम् २, } | ईडम् २, } | ईडिडिषम् २ ; } |
| ईडित्वा २, } | ईडयित्वा २, } | ईडिडिषित्वा २. } |

(82-A) " ईड स्तुतौ " (X-चुरादिः-1668. सक. सेट्. उभय.)

'—स्तुत्यामीट्टे तत्रेडयेण्णिचि ।' (श्लो-84) इति देवः ।

| | |
|---|---|
| ईडकः-डिका, | ईडिडयिषकः-षिका ; |
| ईडयिता-त्री, | ईडिडयिषिता-त्री ; |
| ईडयन्-न्ती, | ईडिडयिषन्-न्ती ; |
| ईडयिष्यन्-न्ती-ती, | ईडिडयिषिष्यन्-न्ती-ती ; |
| ईडयमानः, | ईडिडयिषमाणः ; |
| ईडयिष्यमाणः, | ईडिडयिषिष्यमाणः ; |
| ईट्-ईडौ-ईडः ; | — |
| ईडितम्-तः, | ईडिडयिषितः-तवान् ; |
| ईडः, | ईडिडयिषुः ; |
| ईडयितव्यम्, | ईडिडयिषितव्यम् ; |
| ईडनीयम्, | ईडिडयिषणीयम् ; |
| [A]ईड्यम्, | ईडिडयिष्यम् ; |
| ईषदीडः-दुरीडः-स्वीडः ; | — |
| ईड्यमानः, | ईडिडयिष्यमाणः ; |
| ईडः, | ईडिडयिषः ; |
| ईडयितुम्, | ईडिडयिषितुम् ; |
| ईडना, | ईडिडयिषा ; |

---

1. 'गुरोश्च हलः' (3-3-103) इत्यः प्रत्ययः ।

A. 'खेदस्विन्नयान् पटहगर्दनगर्जिताशे रजे सगर्धनसुगर्दितवीरलोके ।
मध्याम्रपूर्वितनृपे शिशुना रणं वः स्यादेव मानपरिभंसकमीड्यधाम्नाम् ॥'
धा. का. 3-31.

| | |
|---|---|
| ईडनम्, | ईडिडयिषणम्; |
| ईडयित्वा, | ईडिडयिषित्वा; |
| समीडय, | समीडिडयिष्य; |
| ईडम् २, ईडयित्वा २, | ईडिडयिषम् २; ईडिडयिषित्वा २. |

(८३) "ईर गतौ कम्पने च" (II-अदादिः-1018-अक. सक. सेट्. आत्म.)

'—ईरयतीरति। ईरेः क्षेपे विभाषा णौ लुकीर्ते गतिकम्पयोः ॥' (श्लो-153) इति देवः।

| | | |
|---|---|---|
| ईरकः-रिका, | ईरकः-रिका, | ईरिरिषकः-षिका; |
| ईरिता-त्री, | ईरयिता-त्री, | ईरिरिषिता-त्री; |
| — | [1]ईरयन्-न्ती, | ईरयिष्यन्-न्ती-ती; |
| ईराणः, | [2]ईरयमाणः, | ईरिरिषमाणः; |
| ईरिष्यमाणः, | [2]ईरयिष्यमाणः, | ईरिरिषिष्यमाणः; |
| ईः-ईरौ-ईरः; | — | — |
| ईरितः-तम्-तवान्, | ईरितः-तं, | ईरिरिषितः-तवान्; |
| [3]ईरः, समीरः, [4]नीरः, | ईरः, ईरिरिषुः, ईरिरयिषुः, [5]स्वैरी, [6]समीरणः; | |
| ईरितव्यम्, | ईरयितव्यम्, | ईरिरिषितव्यम्; |
| ईरणीयम्, | ईरणीयम्, | ईरिरिषणीयम्; |
| ईर्यम्, | ईर्यम्, | ईरिरिष्यम्, |
| ईषदीरः-दुरीरः-स्वीरः; | — | — |
| [A]ईर्यमाणः, प्रेर्यमाणः, | ईर्यमाणः, | ईरिरिष्यमाणः; |

1. 'निगरणचलनार्थेभ्यश्च' (1-3-87) इति ण्यन्तात् परस्मैपदमेव।
2. गत्यर्थकत्वे तु ण्यन्तात् आत्मनेपदमपि भवति।
3. 'इगुपधज्ञाप्रीकिरः कः' (3-1-135) इति कर्तरि कः। वायुः।
4. 'निम्नम् ईर्ते=गच्छतीति नीरम्=जलम्। वृत्तिविषये निश्शब्दः निम्नार्थकः, इति माधवीयधातुवृत्तौ। 'कर्मण्यण्' (3-2-1) इत्यण्।
5. स्वेन ईरितुं शीलमस्येति ताच्छील्ये 'सुप्यजातौ—' (3-2-78) इति णिनिः।
6. 'चलनशब्दार्थादकर्मकाद्युच्' (3-2-148) इति युच् ताच्छीलादिषु। वायुः। अथवा, ण्यन्तात् नन्द्यादित्वात् कर्तरि ल्युः।

A. 'चिकीर्षिते पूर्वतरं स तस्मिन् क्षेमंकरेऽर्थे मुहुरीर्यमाणः। मात्राऽतिमात्रं शुभयैव शुद्ध्या चिरं गुर्वोरधिकं समाधेः ॥' भ. का. 12-6.

| | | |
|---|---|---|
| ईरः, [1]स्वैरम्, | ईरः, | ईरिरिषः ; |
| ईरितुम्, | ईरयितुम्, | ईरिरिषितुम् ; |
| ईरा, | ईरणा, | ईरिरिषा; ईरिरयिषा; |
| ईरणम्, | ईरणम्, | ईरिरिषणम् ; |
| ईरित्वा, | ईरयित्वा, | ईरिरिषित्वा ; |
| मेर्य, | समीर्य, | समीरिरिष्य ; |
| ईरम् २, ईरित्वा २, | ईरम् २, ईरयित्वा २, | ईरिरिषम् २ ; ईरिरिषित्वा २. |

(84) "ईर क्षेपे" (X-चुरादिः-1811-सक. सेट्. उभ. आधृषीयः)

'ईरयतीरति । ईरेः क्षेपे विभाषा णौ लुकीर्ते गतिकम्पयोः ।' (श्लो. 153) इति देवः ।

'आधृषाद्वा' (ग. सू. चुरादौ) इति णिचो वैकल्पिकत्वम् । ण्यन्तात् शुद्धाच्च धातोः पूर्वोक्तेरतिवत् (83) रूपाणि सर्वाणि ज्ञेयानि । णिजभावपक्षे 'शेषात् कर्तरि परस्मैपदम्' (1-3-78) इति शास्त्रात् शतरि ईरन्-न्ती ईरिष्यन्-न्ती-ती इति रूपाणि—इति विशेषः । ण्यन्तात् सनि तु—

| | |
|---|---|
| ईरिरयिषकः-षिका, | ईरिरयिष्यम् ; |
| ईरिरयिषिता-त्री, | ईषदीरिरयिषः ; |
| ईरिरयिषन्-न्ती, | ईररियिष्यमाणः ; |
| ईरिरयिषिष्यन्-न्ती-ती, | ईरिरयिषितुम् ; |
| ईरिरयिषमाणः, | ईरिरयिषा ; |
| ईरिरयिषिष्यमाणः, | ईरिरयिषणम् ; |
| ईरिरयिषितः-तवान्, | ईरिरयिषित्वा ; |
| ईरिरयिषुः, | समीरिरयिष्य ; |
| ईरिरयिषितव्यम्, | ईरिरयिषम् २ ; |
| ईरिरयिषणीयम् ; | ईरिरयिषित्वा २. |
| — | इत्यादि रूपाणि । |

1. ईरणम् = ईरः । स्वेनाभिप्रायेणेरोऽस्मिन्-इति स्वैरम् । घञ् । स्वभावान्नपुंसकलिङ्गत्वम् ।

## (85) "ईर्क्ष्य ईर्ष्यायाम्" (I-भ्वादिः-510-सक-सेट्.पर.)

ईर्ष्या=असहनम् ।

| | | |
|---|---|---|
| ईर्क्ष्यकः-र्क्ष्यिका, | ईर्क्ष्यकः-र्क्ष्यिका, | [1]ईर्चिक्ष्यिषकः-षिका ; |
| ईर्क्ष्यिता-त्री, | ईर्क्ष्ययिता-त्री, | ईर्चिक्ष्यिषिता-त्री ; |
| ईर्क्ष्यन्-न्ती, | ईर्क्ष्ययन्-न्ती, | ईर्चिक्ष्यिषन्-न्ती ; |
| ईर्क्ष्यिष्यन्-न्ती-ती, | ईर्क्ष्ययिष्यन्-न्ती-ती, | ईर्चिक्ष्यिषिष्यन्-न्ती-ती; |
| — | ईर्क्ष्ययमाणः, | ईर्क्ष्ययिष्यमाणः ; |
| [2]ईर्ट्-ईर्क्ष्यौ-ईर्क्ष्यः ; | — | — |
| ईर्क्ष्यितम्-तः-तवान्, | ईर्क्ष्यितः, | ईर्चिक्ष्यिषितः-तवान् ; |
| ईर्क्ष्यः, | ईर्क्ष्यः, | ईर्चिक्ष्यिषुः ; |
| ईर्क्ष्यितव्यम्, | ईर्क्ष्ययितव्यम्, | ईर्चिक्ष्यिषितव्यम् ; |
| ईर्क्ष्यणीयम्, | ईर्क्ष्यणीयम्, | ईर्चिक्ष्यिषणीयम् ; |
| ईर्क्ष्यम्, | ईर्क्ष्यम्, | ईर्चिक्ष्यिष्यम् ; |
| ईषदीर्क्ष्यः, दुरीर्क्ष्यः, स्वीर्क्ष्यः ; | | — |
| ईर्क्ष्यमाणः, | ईर्क्ष्यमाणः, | ईर्चिक्ष्यिष्यमाणः ; |
| ईर्क्ष्यः, | ईर्क्ष्यः, | ईर्चिक्ष्यिषः ; |
| ईर्क्ष्यितुम्, | ईर्क्ष्ययितुम्, | ईर्चिक्ष्यिषितुम् ; |
| [A]ईर्क्ष्या, | ईर्क्ष्यणा, | ईर्चिक्ष्यिषा ; |
| ईर्क्ष्यणम्, | ईर्क्ष्यणम्, | ईर्चिक्ष्यिषणम् ; |
| ईर्क्ष्यित्वा, | ईर्क्ष्ययित्वा, | ईर्चिक्ष्यिषित्वा ; |
| समीर्क्ष्य, | समीर्क्ष्य, | समीर्चिक्ष्यिष्य ; |
| ईर्क्ष्यम् २, ईर्क्ष्यित्वा २, } | ईर्क्ष्यम् २, ईर्क्ष्ययित्वा २, } | ईर्चिक्ष्यिषम् २, ईर्चिक्ष्यिषित्वा २. } |

---

1. अभ्यासे चकारेकारयोः, उत्तरखण्डे ककारषकारयकाराणां च श्रवणं बोध्यम् ।
2. 'स्कोः संयोगाद्योः—' (8-2-29) इति ककारस्य लोपः । षकारस्य जश्त्वम् । यकारस्य संयोगान्तलोपः ।

A. 'राधाकृतेर्क्ष्याकलहावलोकनात् ईर्ष्यां दधन्त्या रमया प्रमोदितम् ।' धा.का. 1-66.

(86) "ईर्ष्य ईर्ष्यायाम्" (I-भ्वादिः-511-सक. सेट्. पर.)

ईर्ष्या=कामनम् असहनम्-इति क्षीरस्वामी।

ईर्ष्यकः-र्ष्यिका, ईर्ष्यकः-र्ष्यिका, [1]ईर्ष्यियिषकः-ईर्ष्यिषिषकः-[2]षिका;
ईर्ष्यिता-त्री, ईर्ष्ययिता-त्री, ईर्ष्यियिषिता, ईर्ष्यिषिषिता-त्री;
ईर्ष्यन्-न्ती, ईर्ष्ययन्-न्ती, ईर्ष्यियिषन्-न्ती, ईर्ष्यिषिषन्-न्ती;
ईर्ष्यिष्यन्-न्ती-ती, ईर्ष्ययिष्यन्-न्ती-ती, ईर्ष्यियिषिष्यन्-न्ती-ती,
ईर्ष्यिषिषिष्यन्-न्ती-ती;
— ईर्ष्ययमाणः, ईर्ष्ययिष्यमाणः; —
[3]ईर्ट्-ईर्ष्यौ-ईर्ष्यः; — — —
ईर्ष्यितम्-तः-तवान्, ईर्ष्यितः, ईर्ष्यियिषितम्, ईर्ष्यिषिषितम्-तः-तवान्;
ईर्ष्यः, ईर्ष्यः, ईर्ष्यियिषुः, ईर्ष्यिषिषुः;
ईर्ष्यितव्यम्, ईर्ष्ययितव्यम्, ईर्ष्यियिषितव्यम्, ईर्ष्यिषिषितव्यम्;
ईर्ष्यणीयम्, ईर्ष्यणीयम्, ईर्ष्यियिषणीयम्, ईर्ष्यिषिषणीयम्;
ईर्ष्यम्, ईर्ष्यम्, ईर्ष्यियिष्यम्, ईर्ष्यिषिष्यम्;
ईषदीर्ष्यः, दुरीर्ष्यः, स्वीर्ष्यः; —
ईर्ष्यमाणः, ईर्ष्यमाणः, ईर्ष्यियिष्यमाणः, ईर्ष्यिषिष्यमाणः;
ईर्ष्यः, ईर्ष्यः, ईर्ष्यियिषः, ईर्ष्यिषिषः;
ईर्ष्यितुम्, ईर्ष्ययितुम्, ईर्ष्यियिषितुम्, ईर्ष्यिषिषितुम्;
[A]ईर्ष्या, ईर्ष्यणा, ईर्ष्यियिषा, ईर्ष्यिषिषा;
ईर्ष्यणम्, ईर्ष्यणम्, ईर्ष्यियिषणम्, ईर्ष्यिषिषणम्;
ईर्ष्यित्वा, ईर्ष्ययित्वा, ईर्ष्यियिषित्वा, ईर्ष्यिषिषित्वा;
समीर्ष्य, समीर्ष्य, समीर्ष्यियिष्य, समीर्ष्यिषिष्य;
ईर्ष्यम् २, ईर्ष्यित्वा २, } ईर्ष्यम् २, ईर्ष्ययित्वा २, } ईर्ष्यियिषम् २, ईर्ष्यियिषित्वा २, } ईर्ष्यिषिषम् २; ईर्ष्यिषिषित्वा २. }

1. 'ईर्ष्यतेस्तृतीयस्य' (वा. 6-1-3) इति वार्तिके तृतीयस्य व्यञ्जनस्य, तृतीयस्य एकाच इति वा पक्षद्वयमभिप्रेतम्। आद्यपक्षे एवं रूपम्। यकारस्य द्वित्वम्।
2. द्वितीयपक्षे सनो द्वित्वम्।
3. 'लोपो व्योर्वलि' (6-1-66) इति वलि लोपे, 'झलां जशोऽन्ते' (8-2-39) इति जश्त्वम्। 'रात् सस्य' (8-2-24) इति नियमात् संयोगान्तलोपो न।

A. 'राधाकृतेर्ष्याकलहावलोकनात् ईर्ष्यां दयन्त्या रमया प्रमोदितम्।' धा.का. 1-66.

(87) "ईश ऐश्वर्ये" (II-अदादिः-1020. अक. सेट्. आत्म.)

| | | |
|---|---|---|
| ईशकः-शिका, | ईशकः-शिका, | ईशिशिषकः-षिका ; |
| [A]ईशिता-त्री, | ईशयिता-त्री, | ईशिशिषिता-त्री ; |
| — | ईशयन्-न्ती, | ईशयिष्यन्-न्ती-ती ; |
| [B]ईशानः, | ईशयमानः, | ईशिशिषमाणः ; |
| ईशिष्यमाणः, | ईशयिष्यमाणः, | ईशिशिषिष्यमाणः ; |
| [1]ईट्-ईशौ-ईशः, | [C]भुजगेट् ; | — |
| ईशितः-तम्-तवान्, | ईशितः, | ईशिशिषितः-तवान् ; |
| [D]ईशः, [2]ईश्वर[E]:-रा, | ईशिशिषुः, ईशानः, | [F]ईश्वरी[4], ईशिशयिषुः ; |
| ईशितव्यम्, | ईशयितव्यम्, | ईशिशिषितव्यम् ; |
| ईशनीयम्, | ईशनीयम्, | ईशिशिषणीयम् ; |
| ईश्यम्, | ईश्यम्, | ईशिशिष्यम् ; |
| ईषदीशः, दुरीशः, स्वीशः; | | — |
| ईश्यमानः, | ईश्यमानः, | ईशिशिष्यमाणः ; |
| ईशः, | ईशः, | ईशिशिषः ; |
| ईशितुम्, | ईशयितुम्, | ईशिशिषितुम् ; |

---

1. शान्तत्वात् 'व्रश्चभ्रस्ज—' (8-2-36) इति षत्वे, जश्त्वम् ।
2. 'स्थेशभासपिसकसो वरच्' (3-2-175) इति वरच् ताच्छीलिकः । 'नेड् वशि कृति—' (7-2-8) इतीण्णिषेधः । स्त्रियां टाप् ।
3. 'ताच्छील्यवयोवचनशक्तिषु चानश्' (3-2-129) इति चानश् ।
4. 'अन्येभ्योऽपि दृश्यन्ते' (3-2-75) इति वनिपि, स्त्रियां 'वनो र च' (4-1-7) इति ङीप् रेफादेशश्च । आत्रेयादयस्तु व्याप्त्यर्थकादश्नुतेरौणादिके (5-17) वरटि धातोरीकारे, टित्त्वात् ङीपि समर्थयन्ति । बहुलग्रहणादीशधातोरेव वा वरटि रूपमित्यपि च केचित् ।

A. 'तमीशितारं तिसृणां गतीनां सुस्वाय नृणामुररीकृताङ्गम् ।' धा. वि. 3-24.
B. 'अमितंपचमीशानं सर्वभोगीणमुत्तमम् ।' भ. का. 6-97.
C. 'भुजगेशि निशाकराभिरामे द्विषतां शोककरे तदाऽवतीर्णे' । वा. वि. 2-67.
D. 'ईडपोऽयमीशः समुपास्ति शीलैरशासितः पीतपटीं वसानः ।' धा. का. 2-45.
E. 'अभीरवसं स्त्रीभिः मातुराभिरिहेश्वरः ॥' भ. का. 7-25.
F. 'समप्रशक्तिस्समयोपयातः प्राणेश्वरीं प्राप्तुमियेष शौरिः' या. अ. 13-1. गौरादित्वात् ङीप् ।

| | | |
|---|---|---|
| ईशा, | ईशना, | ईशिशिषा, ईशिशयिषा ; |
| ईशनम्, | ईशनम्, | ईशिशिषणम् ; |
| ईशित्वा, | ईशयित्वा, | ईशिशिषित्वा ; |
| समीश्य, | समीश्य, | समीशिशिष्य ; |
| ईशम् २, } ईशित्वा २, } | ईशम् २, } ईशयित्वा २, } | ईशिशिषम् २ ; } ईशिशिषित्वा २. } |

(88) "ईष गतिहिंसादर्शनेषु" (I-भ्वादिः-611-सक. सेट्. आत्म.)

'ईषतीतीष उञ्छेऽर्थे, गत्यादावीषते भवेत् ।' (श्लो-169) इति देवः ।

ईजधातुवत् (81) रूपाणि ज्ञेयानि । मनीषा—'गुरोश्च हलः' (3-3-103) इति अप्रत्ययः । 'शकन्ध्वादिषु टेः पररूपं वाच्यम्' (6-1-94) इति पररूपम् । मनस ईषा=मनीषा । ईषितवान्[A] ।

(89) "ईष उञ्छे" (I-भ्वादिः-684-सक. सेट्-पर. )

'ईषतीतीष उञ्छेऽर्थे, गत्यादावीषते भवेत् ।' (श्लो-169) इति देवः ।

ईषन्-न्ती, ईषिष्यन्-न्ती-ती, ईषयन्-न्ती, ईषयिष्यन्-न्ती-ती, ईषिषिषन्-न्ती, ईषिषिषिष्यन्-न्ती-ती, इति शतरि परं विशेषः । घञि ईषः[B] । *अन्यानि रूपाणि सर्वाण्यपि ईजधातुवत (81) ज्ञेयानि ।*

(90) "ईह चेष्टायाम्" (I-भ्वादिः-632. अक.सेट्. आत्म.)

ईज गतिकुत्सनयोः—(81) इति धातुवत् सर्वाणि रूपाणि ज्ञेयानि ।

अभिधानस्वाभाव्यात् स्त्रियां कर्मव्यतीहारेऽपि णच् नेष्ट इति, तेन व्यतीहा-इत्येव रूपमिति च भाष्ये ।

(91) "उक्ष सेचने" (I-भ्वादिः-657. सक. सेट्-पर. )

| | | |
|---|---|---|
| उक्षकः-क्षिका, | उक्षकः-क्षिका, | उचिक्षिषकः-षिका ; |
| उक्षिता-त्री, | उक्षयिता-त्री, | उचिक्षिषिता-त्री ; |

---

A. 'संक्लेशितत्वक्कथदक्षणदीक्षितं तं प्रेक्ष्यैष जन्मफलमीषितवान् महात्मा ॥' धा. का. 1-77.

B. 'ईषन् दृशोरमृतयूषमजूषकस्त्वं भूषस्यनूषमतिरीषमुखो प्रियः स्माम् ॥' धा. का. 1-86.

| | | |
|---|---|---|
| [A]उक्षन्-न्ती, | उक्षयन्-न्ती, | उचिक्षिपन्-न्ती ; |
| [1]व्यत्युक्षमाणः, | उक्षयमाणः, | उक्षयिष्यमाणः ; |
| उक्षिष्यन्-न्ती-ती, | उक्षयिष्यन्-न्ती-ती, | उचिक्षिषिष्यन्-न्ती-ती ; |
| [2]उट्-ड्-उक्षौ-उक्षः ; | — | — |
| उक्षितम्-तः, | उक्षितः-तं, | उचिक्षिषितः-तवान् ; |
| उक्षः, उक्षः, | उचिक्षिषुः, | उचिक्षयिषुः ; |
| उक्षितव्यम्, | उक्षयितव्यम्, | उचिक्षिषितव्यम् ; |
| उक्षणीयम्, | उक्षणीयम्, | उचिक्षिषणीयम् ; |
| उक्ष्यम्, | उक्ष्यम्, | उचिक्षिष्यम् ; |
| ईषदुक्षः, दुरुक्षः, सूक्षः ; | — | — |
| उक्ष्यमाणः, | उक्ष्यमाणः, | उचिक्षिष्यमाणः ; |
| उक्षः, | उक्षः, | उचिक्षिषः ; |
| उक्षितुम्, | उक्षयितुम्, | उचिक्षिषितुम् ; |
| उक्षा-उक्षणा, [B3]व्यात्युक्षी, | उचिक्षिषा, | उचिक्षयिषा ; |
| प्रोक्षणम्, | उक्षणम्, | उचिक्षिषणम् ; |
| उक्षित्वा, | उक्षयित्वा, | उचिक्षिषित्वा ; |
| प्रोक्ष्य, | अभ्युक्ष्य, | प्रोचिक्षिष्य ; |
| उक्षम् २, उक्षित्वा २, | उक्षम् २, उक्षयित्वा २, | उचिक्षिषम् २ ; उचिक्षिषित्वा २. |
| [4]उक्षा. | — | — |

---

1. 'कर्तरि कर्मव्यतिहारे (1-3-14) इति आत्मनेपदम् ।
2. 'स्कोः—' (8-2-29) इति कलोपः ।
3. 'कर्मव्यतिहारे णच् स्त्रियाम्' (3-3-43) इति णचि 'णचःस्त्रियामञ्' (5-4-14) इत्यञ् । 'टिड्ढा—' (4-1-15) इति ङीप् ।
4. 'श्वन् उक्षन्—' (द. उ-6-55.) इत्यादिना कनिन्प्रत्ययः । उक्षा=वृषभः ।

A. 'उक्षन्नेनं मन्दहासेन रक्षन् क्षिपन् निक्षन् बल्लवीस्त्रिक्षिताथाः ॥' धा. का. 1-83.
B. 'ताः कान्तैस्सह करपुष्करेरिताम्बुव्यात्युक्षीमभिसरणग्लहामदीव्यन् ॥' शिशुपालवधे (8-32) ।

## (92) "उख गत्यर्थः" (I-भ्वादिः-128-सक. सेट्. पर.)

| | | |
|---|---|---|
| ओखकः-खिका, | ओखकः-खिका, | [1]ओचिखिषकः-षिका ; |
| ओखिता-त्री, | ओखयिता-त्री, | ओचिखिषिता-त्री ; |
| ओखन्-न्ती, | ओखयन्-न्ती, | ओचिखिषन्-न्ती ; |
| ओखिष्यन्-न्ती-ती, | ओखयिष्यन्-न्ती-ती, | ओचिखिषिष्यन्-न्ती-ती ; |
| — | ओखयमानः, | ओखयिष्यमाणः ; |
| उक्-उखौ-उखः ; | — | — |
| [2]ओखितम्[A], उखितम्, } तः-तवान्, | ओखितः-तं, | ओचिखिषितम्-तः-तवान् ; |
| [3]उखः, | ओखः, | ओचिखिषुः,ओचिखयिषुः ; |
| ओखितव्यम्, | ओखयितव्यम्, | ओचिखिषितव्यम् ; |
| ओखनीयम्, | ओखनीयम्, | ओचिखिषणीयम् ; |
| ओख्यम्, | ओख्यम्, | ओचिखिष्यम् ; |
| ईषदोखः, दुरोखः,स्वोखः ; | — | — |
| उख्यमानः, | ओख्यमानः, | ओचिखिष्यमाणः ; |
| ओखः, | ओखः, | ओचिखिषः ; |
| ओखितुम्, | ओखयितुम्, | ओचिखिषितुम् ; |
| [4]उक्तिः, | ओखना, | ओचिखिषा, ओचिखयिषा; |
| ओखनम्, [5]प्रोखणम्, | ओखनम्, | ओचिखिषणम् ; |
| [6]ओखित्वा, | ओखयित्वा, | ओचिखिषित्वा ; |

1. ओणेः ऋदित्करणात् ज्ञित्वात् उपधाकार्यं प्रबलम्। तेन पूर्वं लघूपधगुणः। पश्चात् द्वित्वम्। ततः 'कुहोश्चुः' (7-4-62) इति अभ्यासे चुत्वम्।
2. 'उदुपधात् भावादिकर्मणोरन्यतरस्याम' (1-2-21) इत्यत्र 'शब्विकरणेभ्य एवेष्यते' (वा. 1-2-21) इति वार्तिकात् कित्वविकल्पः।
3. 'इगुपध—' (3-1-135) इति कर्तरि कः। उखो मुनिः।
4. 'तितुत्र—' (7-2-9) इति नेट्। 'खरि च' (8-4-55) इति चर्त्वम्।
5. 'एङि पररूपम्' (6-1-94) इति पररूपम्। 'कृत्यचः' (8-4-29) इति णत्वम्।
6. 'न क्त्वा सेट्' (1-2-18) इति कित्वनिषेधाद्गुणः।
A. 'अराखितत्वग्भिरलाखिनच्छदैः प्रद्राखिनाध्राखिफलैश्च शाखिभिः। (धा. का. 1-18) प्रङ्खितं प्रोखितसत्समुङ्खितं खगैर्नखन् माक्षतरुक्षिबौरभम् ॥'

| | | |
|---|---|---|
| समुख्य, | समोख्य, | समोचिखिष्य ; |
| ओखम् २, ओखित्वा २, | ओखम् २, ओखयित्वा २, | ओचिखिषम् २ ; ओचिखिषित्वा २. |

## (93) "उखि गतौ" (I-भ्वादिः-129-सक.सेट्-पर.)

गत्यर्थकेङ्खतिवत् (64) सर्वाणि रूपाणि ज्ञेयानि ।

## (94) "उङ् शब्दे" (I-भ्वादिः-953-अक. अनि. आत्म.)

| | | |
|---|---|---|
| आवकः-विका, | आवकः-विका, | [1]ऊपिषकः-पिका ; |
| ओता-त्री, | आवयिता-त्री, | ऊपिषिता-त्री ; |
| — | आवयन्-न्ती, | आवयिष्यन्-न्ती-ती ; |
| [A]अवमानः, | आवयमानः, | ऊपिषमाणः ; |
| ओष्यमाणः, | आवयिष्यमाणः, | ऊपिषिष्यमाणः ; |
| [2]समुत्-समुतौ-समुतः ; | — | — |
| उतम्-तः-तवान्, | आवितम्-तः-तवान्, | ऊपिषितम्-तः-तवान् ; |
| [3]अवः, | आवः, | ऊपिषुः, आविवयिषुः ; |
| ओतव्यम्, | आवयितव्यम्, | ऊपिषितव्यम् ; |
| अवनीयम्, | आवनीयम्, | ऊपिषणीयम् ; |
| [4]अव्यम्, [5]अवश्याव्यम्, | आव्यम्, | ऊपिष्यम् ; |
| ईषदवः-दुरवः-स्ववः ; | — | — |
| [6]ऊयमानः, | आव्यमानः, | ऊपिष्यमाणः ; |
| [7]अवः, | आवः, | ऊपिषः ; |

1. 'इको झल्' (1-2-9) इति सनः कित्त्वे, 'अज्झनगमां सनि' (6-4-16) इति दीर्घः । द्वित्वम् ।
2. 'ह्रस्वस्य पिति—' (6-1-71) इति तुक् ।
3. पचाद्यच् ।
4. 'अचो यत्' (3-1-97) इति यत् ।
5. 'ओरावश्यके' (3-1-125) इति ण्यत् ।
6. 'अकृत्सार्वधातुकयोर्दीर्घः' (7-4-25) इति दीर्घः ।
7. 'ऋदोरप्' (3-3-57) इत्यप् भावे ।

A. 'स्तोत्रावमानैः द्रुतवेणुवीणैः चतुराङ्गभैर्व्योमचरैर्युतं वै । प्रवे भवाब्धिप्लवमारुतानां धुनामयं भक्तिनिमेषमङ्घ्रिम् ॥' धा. का. 2-36.

| | | |
|---|---|---|
| ओतुम्, | आवयितुम्, | ऊयिपितुम्; |
| उतिः, | आवना, | ऊयिषा, आविवयिषा; |
| अवनम्, | आवनम्, | ऊयिषणम्; |
| उत्वा, | आवयित्वा; | ऊयिषित्वा; |
| समुत्य, | समाव्य, | समूयिष्य; |
| आवम् २, उत्वा २, | आवम् २, आवयित्वा २, | ऊयिषम् २; ऊयिषित्वा २. |

(95) "उच समवाये" (IV दिवादिः-1223. सक. सेट्. पर.)

समवायः=ऐक्यम्–इति क्षीरस्वामी।

| | | |
|---|---|---|
| ओचकः-चिका, | ओचकः-चिका, | ओचिचिषकः-षिका; |
| ओचिता-त्री, | ओचयिता-त्री, | ओचिचिषिता-त्री; |
| [1]उच्यन्-न्ती, | ओचयन्-न्ती, | ओचिचिषन्-न्ती; |
| ओचिष्यन्-न्ती-ती, | ओचयिष्यन्-न्ती-ती, | ओचिचिषिष्यन्-न्ती-ती; |
| — | ओचयमानः, | ओचयिष्यमाणः; |
| उक्-उचौ-उचः; | — | — |
| उचितम्-तः-तवान्, | ओचितः-तं, | ओचिचिषितः-तवान्; |
| ओक[2]:-न्योकः[3], ओकः, | ओचिचिषुः, | ओचिचयिषुः; |
| ओचितव्यम्, | ओचयितव्यम्, | ओचिचिषितव्यम्; |
| ओचनीयम्, | ओचनीयम्, | ओचिचिषणीयम्; |
| ओच्यम्, | ओच्यम्, | ओचिचिष्यम्; |
| ईषदोचः, दुरोचः, स्वोचः, | — | — |
| उच्यमानः, | ओच्यमानः, | ओचिचिष्यमाणः; |
| ओकः-न्योकः,[4] | ओकः, | ओचिचिषः; |

| | | |
|---|---|---|
| ओचितुम्, | ओचयितुम्, | ओचिचिपितुम्; |
| उक्तिः, | ओचना, ओचिचिषा, | ओचिचयिषा; |
| ओचनम्, | ओचनम्, | ओचिचिषणम्; |
| [1]ओचित्वा, | ओचयित्वा, | ओचिचिषित्वा; |
| समुच्य, | समोच्य, | समोचिचिष्य; |
| [2]ओचम् २, ओचित्वा २, | ओचम् २, ओचयित्वा २; | ओचिचिषम् २; ओचिचिषित्वा २. |
| ओकः[3]-ओकसी. | — | — |

(96) " उछि उञ्छे " (I-भ्वादिः-216-सक. सेट्. पर.)

' शशपोरुञ्छतीत्युञ्छे स्वरभेदाद् द्विरुच्यते ।' (श्लो-55) इति देवः ।

| | | |
|---|---|---|
| उञ्छकः-ञ्छिका, | उञ्छकः-ञ्छिका, | [4]उञ्चिच्छिषकः-षिका; |
| उञ्छिता-त्री, | उञ्छयिता-त्री, | उञ्चिच्छिषिता-त्री; |
| उञ्छन्-न्ती, | उञ्छयन्-न्ती, | उञ्चिच्छिषन्-न्ती; |
| उञ्छिष्यन्-न्ती-ती, | उञ्छयिष्यन्-न्ती-ती, | उञ्चिच्छिषिष्यन्-न्ती-ती; |
| — | उञ्छयमानः, | उञ्छयिष्यमाणः; |
| उन्-उञ्छौ-उञ्छः; | — | — |
| उञ्छितः-तं-तवान्, | उञ्छितः-तम्, | उञ्चिच्छिषितः-तवान्; |
| उञ्छः, | उञ्छः, | उञ्चिच्छिषुः, उञ्चिच्छयिषुः; |
| उञ्छितव्यम्, | उञ्छयितव्यम् | उञ्चिच्छिषितव्यम्; |
| उञ्छनीयम्, | उञ्छनीयम्, | उञ्चिच्छिषणीयम्; |
| उञ्छ्यम, | उञ्छ्यम्, | उञ्चिच्छिष्यम्; |

---

1. ' न क्त्वा सेट् ' (1-2-18) इति कित्त्वनिषेधात् गुणः ।
2. ' आभीक्ष्ण्ये णमुल् च ' (3-4-22) इत्यत्र चकारात् क्त्वाऽपि । ' नित्यवीप्सयोः ' (8-1-4) इति द्वित्वम् ।
3. औणादिके असुन्प्रत्यये बाहुलकात् कुत्वम् । ' मुस्तामोष्यमसः किटिस्त्वमसमो लुञ्चन् खलान्नोकसो भ्रस्यद्भ्रंशनवर्शकाकुशदयस्तृष्णाहरो हृष्य मे ॥ ' धा का. 2-66.
4. ' न न्द्राः संयोगादयः ' (6-1-3) इति नकारस्य द्वित्वनिषेधः । ' छे च ' (6-1-37) इति तुक् । असाभ्यासावयवत्वाभावात् हलादिशेषो न ।

ईषदुञ्छः, दुरुञ्छः, सूञ्छः ; — —

| | | |
|---|---|---|
| उञ्छ्यमानः, | उञ्छ्यमानः, | उचिच्छिष्यमाणः ; |
| [A]उञ्छः, | उञ्छः, | उचिच्छिषः ; |
| उञ्छितुम् , | उञ्छयितुम् , | उचिच्छिषितुम् ; |
| उञ्छा, | उञ्छना, | उचिच्छिषा, उचिच्छयिषा; |
| [B]उञ्छनम् , | उञ्छनम् , | उचिच्छिषणम् ; |
| उञ्छित्वा, | उञ्छयित्वा, | उचिच्छिषित्वा ; |
| समुञ्छ्य, | समुञ्छ्य, | समुचिच्छिष्य; |
| उञ्छम् २, उञ्छित्वा २, | उञ्छम् २, उञ्छयित्वा २, | उचिच्छिषम् २; उचिच्छिषित्वा २. |

(97) "उछि उञ्छे" (VI-तुदादिः-1254-सक. सेट्. पर.)

'शशपोरुञ्छतीत्युञ्छे स्वरभेदाद् द्विरुच्यते ।' (श्लो-55) इति देवः ।

शतरि परं [C]उञ्छती-उञ्छन्ती इति रूपम् । 'आच्छीनद्योर्नुम्' (7-1-80) इति नुमो वैकल्पिकत्वम् । अन्यत् सर्वमपि भौवादिकोञ्छतिवत् (96) ज्ञेयम् ।

(98) "उछी विवासे" (I-भ्वादिः-216. सक. सेट्. पर.)

विवासः=समाप्तिः । प्रायेणायं विपूर्वकः प्रयुज्यते इति पुरुषकारः । 'शशपोरुञ्छतीत्युञ्छे स्वरभेदाद् द्विरुच्यते । उच्छतीति विवासे स्यात् इदितोऽनिदितस्तयोः ।' (श्लो-56) इति देवः ।

| | | |
|---|---|---|
| व्युच्छकः-च्छिका, | उच्छकः च्छिका, | उचिच्छिषकः-षिका ; |
| व्युच्छिता-त्री, | उच्छयिता-त्री, | उचिच्छिषिता-त्री ; |
| व्युच्छन्-न्ती, | व्युच्छयन्-न्ती, | उचिच्छिषन्-न्ती ; |

---

A. 'उञ्छो धान्यस्य आदानं. कणिशाद्यर्जनं शिलम् ।' इति यादवप्रकाशः ।

B. 'अहूर्णचित्ताः परिमूर्छितव्रताः स्फूर्णभिया अप्रयुशः कृतोञ्छनाः । भजन्ति यां व्युष्टिमतोऽपि भूयसीं प्रजन्ति यत् प्रजनमात्रतो जनाः ॥' धा. का. 1-29.

C. 'श्रवणस्याचरसोञ्छती फलगणानव्युञ्छितायां निशि स्नान्ती नच्छेति मिमिषता सुजनता यस्मिन् हितं जग्मती ।' धा. का. 2-73.

| | | |
|---|---|---|
| व्युच्छिष्यन्-न्ती-ती, | उच्छयिष्यन्-न्ती-न्ती, | उचिच्छिषिष्यन्-न्ती-ती ; |
| — | व्युच्छयमानः, | व्युच्छयिष्यमाणः ; |
| [1]व्युट्-व्युशौ-व्युशः ; | — | — |
| [2]व्युष्टः-ष्टम्-ष्टवान्-[A]व्युष्टा, | व्युच्छितम्-तः-तवान्, | उचिच्छिषितः-तवान् ; |
| उच्छः, | उच्छः, | उचिच्छिषुः, उचिच्छयिषुः; |
| व्युच्छितव्यम्, | व्युच्छयितव्यम्, | उचिच्छिषितव्यम् ; |
| व्युच्छनीयम्, | उच्छनीयम्, | उचिच्छिषणीयम् ; |
| व्युच्छ्यम्, | उच्छ्यम्, | उचिच्छिष्यम् ; |
| ईषदुच्छः-दुरुच्छः-सूच्छः ; — | | — |
| व्युच्छ्यमानः, | उच्छ्यमानः, | उचिच्छिष्यमाणः ; |
| उच्छः, | उच्छः, | उचिच्छिषः ; |
| उच्छितुम्, | व्युच्छयितुम्, | उचिच्छिषितुम् ; |
| [B][3]उष्टिः-उच्छा[4], | व्युच्छना, | उचिच्छिषा, उचिच्छयिषा; |
| उच्छनम्, | उच्छनम्, | उचिच्छिषणम् ; |
| उच्छित्वा, | उच्छयित्वा, | उचिच्छिषित्वा ; |
| व्युच्छ्य, | व्युच्छ्य, | व्युचिच्छिष्य ; |
| उच्छम् २, उच्छित्वा २, | उच्छम् २, उच्छयित्वा २, | उचिच्छिषम् २ ; उचिच्छिषित्वा २. |

(99) "उछी विवासे" (VI-तुदादिः-1295-सक. सेट्-पर.)

'शशपोरुच्छतीत्युच्छे स्वरभेदाद् द्विरुच्यते। उच्छतीति विवासे स्यात् इदितोऽनिदितस्तयोः ॥' (श्लो-55) इति देवः ।

---

1. 'च्छ्वोः शूड्—' (6-3-19) इति शः। पदान्ते 'व्रश्च—' (8-2-36) इत्यादिना षत्वे जश्त्वे च रूपम्।
2. 'श्वीदितो निष्ठायाम्' (7-2-14) इति इट् न। 'व्रश्चभ्रस्ज–' (8-2-36) इति षत्वम्।
3. बाहुलकात् क्तिन्। षत्वम्। 'व्युष्टिः फले समृद्धौ च' इत्यमरः।
4. 'गुरोश्च हलः' (3-3-103) इति अप्रत्ययः।

A. 'रजन्यां व्युष्टायामुषसि जनयामास तनयम्।' इति क्षीरतरङ्गिण्यामुपात्तः श्लोकः।

B. "अहूर्णचित्ताः परिमूर्च्छितव्रताः स्फूर्णमया अप्रयुशः कृतोञ्छनाः। भजन्ति यां व्युष्टिमतोऽपि भूयसीं प्रजन्ति यत् प्रश्नमात्रतो जनाः॥" धा. का. 1-29.

'अतिक्रमणबन्धनवर्जनेषु च द्रुमे–' इति धातुकाव्ये। शतरि उच्छन्-न्ती-ती-इति रूपाणि, 'आच्छीनद्योर्नुम्–' (7-1-80) इति नुमो वैकल्पिकत्वात्। अन्यानि सर्वाण्यपि रूपाणि भौवादिकोच्छतिवत् (98) ज्ञेयानि। [A]उच्छितम्।

## (100), "उज्झ उत्सर्गे" (VI-तुदादिः-1304-सक. सेट्. पर.)

| | | |
|---|---|---|
| उज्झकः-ज्झिका, | उज्झकः-ज्झिका, | [1]उजिझिषकः-षिका; |
| उज्झिता-त्री, | उज्झयिता-त्री, | उजिझिषिता-त्री; |
| उज्झन्-न्ती, | उज्झयन्-न्ती, | उजिझिषन्-न्ती; |
| उज्झिष्यन्-न्ती-ती, | उज्झयिष्यन्-न्ती-ती, | उजिझिषिष्यन्-न्ती-ती; |
| — | उज्झयमानः, | उज्झयिष्यमाणः; |
| उत्-उज्झौ-उज्झः; | — | — |
| [B]उज्झितम्-तः, | उज्झितः-तं, | उजिझिषितः-तवान्; |
| उज्झः, उज्झः, | उजिझिषुः, | उजिझयिषुः; |
| उज्झितव्यम्, | उज्झयितव्यम्, | उजिझिषितव्यम्; |
| उज्झनीयम्, | उज्झनीयम्, | उजिझिषणीयम्; |
| [2]उद्ध्यः [C] नदः, उज्झ्यम्, उज्झ्यम्, | | उजिझिष्यम्; |
| ईषदुज्झः, दुरुज्झः, सूज्झः; | — | — |
| उज्झ्यमानः, | उज्झ्यमानः, | उजिझिष्यमाणः; |
| उज्झः, | उज्झः, | उजिझिषः; |
| उज्झितुम्, | उज्झयितुम्, | उजिझिषितुम्; |
| उज्झा, | उज्झना, उजिझिषा, | उजिझयिषा; |

1. दोपधोऽयं धातुः। 'न न्द्राः–' (6-1-3) इति दकारस्य द्वित्वनिषेधः।
2. 'भिद्योद्ध्यौ नदे' (3-1-115) इति क्यपि धकारः निपातितो नदे। उज्झति—उदकमित्यर्थे कर्तरि क्यप्।

A. 'वृकण्याचरसोञ्छती फलगणान् अभ्युच्छितायां निशि स्नान्ती नर्च्छति मिच्छिता सुजनता यस्मिन् हितं अर्जती।' धा. का. 2-73.

B. 'नित्यं भूपतिसुज्जनोज्झितमना यत्रास्त खल्या सुखम्॥' धा. का. 2-73.

C. 'समुत्तरन्तावब्यध्यौ नदान् भिद्योद्ध्यसन्निभान्।' भ. का. 6-59. 'तोयदागम इवोद्ध्यभिद्ययोर्नामधेयसदृशं विचेष्टितम्॥' रघुवंशे—11-8.

| | | |
|---|---|---|
| उज्झनम्, | उज्झनम्, | उज्जिझिषणम्; |
| उज्झित्वा, | उज्झयित्वा, | उज्जिझिषित्वा; |
| समुज्झ्य, | समुज्झ्य, | समुज्जिझिष्य; |
| उज्झम् २, उज्झित्वा २, | उज्झम् २, उज्झयित्वा २, | उज्जिझिषम् २; उज्जिझिषित्वा २. |

(100-A) "उठ उपघाते" (1-भ्वादिः-338-सक. सेट्. पर.)

[A]ओठकः-ठिका, ओठकः-ठिका, ओटिठिषकः-षिका—इत्यादीनि सर्वाण्यपि रूपाणि उख (92) धातुवज्ज्ञेयानि।

(101) "उभ्रस उञ्छे" (X-चुरादिः-1743. सक. सेट्. उभ.)

'भ्रस्नाति भ्रासयत्युञ्छे पदे ह्रि भ्रि णिचि भ्रसेः।' (श्लो-190) इति देवः।

| | |
|---|---|
| [1]उद्भ्रासकः-सिका, | उदिभ्रासयिषकः-षिका; |
| उभ्रासयिता-त्री, | उदिभ्रासयिषिता-त्री; |
| उभ्रासयन्[B]-न्ती, | उदिभ्रासयिषन्-न्ती; |
| उभ्रासयिष्यन्-न्ती-ती, | उदिभ्रासयिषिष्यन्-न्ती-ती; |
| उभ्रासयमानः, | उदिभ्रासयिषमाणः; |
| उभ्रासयिष्यमाणः, | उदिभ्रासयिषिष्यमाणः; |
| उभ्राः-उद्भ्रासौ-उभ्रासः; | — |
| उभ्रासितम्-तः-तवान्, | उदिभ्रासयिषितः-तवान्; |
| उभ्रासः, | उदिभ्रासयिषुः; |
| उभ्रासयितव्यम्, | उदिभ्रासयिषितव्यम्; |
| उभ्रासनीयम्, | उदिभ्रासयिषणीयम्; |

1. 'उभ्रस' इत्यत्र उकारः धात्ववयव इति काश्यपक्षीरस्वाम्यादीनां पक्षमवलम्ब्य रूपाणि विलिख्यन्ते। क्र्यादावप्ययं धातुः पठ्यते। उभयत्र उकार इत्—इत्यन्ये। देवोऽप्येवमेवाह।

A. 'वनाश्रयत्वेऽपि सकाठयंठद्रुन् मृगालीहठकर्मवर्जितान्।
रोठन् नृशंसालुठितैरनोठकैर्नतान् धनाढ्यैर्मणिपीठसंश्रयैः॥' धा. का. 1-44.

B. 'शौर्यान्वितेन धृतलिङ्गिनचेलकेन संमोदितो हलधरोऽपि च मुष्टिकेन।
मुष्ट्या तुदन् मुहुरतिभ्रसदाशु दोर्भ्यामुभ्रासयज्जनतुवस्तममोचयच्च॥'
धा. का. 3-42.

| | |
|---|---|
| उध्रास्यम्, | उदिध्रासयिष्यम्; |
| ईषदुध्रासः-दुरुध्रासः-सूध्रासः; | — |
| उध्रास्यमानः, | उदिध्रासयिष्यमाणः; |
| उध्रासः, | उदिध्रासयिषः; |
| उध्रासयितुम्, | उदिध्रासयिषितुम्; |
| उध्रासना, | उदिध्रासयिषा; |
| उध्रासनम्, | उदिध्रासयिषणम्; |
| उध्रासयित्वा, | उदिध्रासयिषित्वा; |
| समुध्रास्य, | समुदिध्रासयिष्य; |
| उध्रासम् २, उध्रासयित्वा २, | उदिध्रासयिषम् २; उदिध्रासयिषित्वा २. |

## (102) "उन्दी क्लेदने" (VII-रुधादिः-1457-अक. सेट्. पर.)

| | | |
|---|---|---|
| उन्दकः-न्दिका, | उन्दकः-न्दिका, | [1]उन्दिदिषकः-षिका; |
| उन्दिता-त्री, | उन्दयिता-त्री, | उन्दिदिषिता-त्री; |
| [2]उन्दन्-ती, | उन्दयन्-न्ती, | उन्दिदिषन्-न्ती; |
| उन्दिष्यन्-न्ती-ती, | उन्दयिष्यन्-न्ती-ती, | उन्दिदिषिष्यन्-न्ती-ती; |
| — | उन्दयमानः, | उन्दयिष्यमाणः; |
| [3]उत्-उन्दौ-उन्दः; | — | — |
| [4]उन्नः-न्नम्-न्नवान्, [A]समुन्नः-न्नम्-न्नवान्, | उन्दितम्-तः, | उन्दिदिषितः-तवान्; |
| उन्दः, उन्दः, | उन्दिदिषुः, | उन्दिदयिषुः; |
| उन्दितव्यम्, | उन्दयितव्यम्, | उन्दिदिषितव्यम्; |
| उन्दनीयम्, | उन्दनीयम्, | उन्दिदिषणीयम्; |

1. 'न न्द्राः—' (6-1-3) इति नकारस्य द्वित्वनिषेधः।
2. 'श्नान्नलोपः' (6-4-23) इति नलोपे 'श्नसोरल्लोपः' (6 4-111) इति अकारलोपः।
3. 'अनिदितां—' (6-4-24) इत्युपधानकारस्य लोपः।
4. 'श्वीदितः—' (7-2-14) इतीण्णिषेधः। 'नुदविदोन्द—' (8-2-56) इति निष्ठानत्वं विकल्पेन भवति।

A. 'को नस्तृणेढि दिनशाम समुत्तमाद्यैः तं गोपसूनुमिति तैलवाकमात्राः।' धा. का. 3-3.

| | | |
|---|---|---|
| उन्द्यम्, | उन्द्यम्, | उन्दिदिष्यम्; |
| ईषदुन्दः, दुरुन्दः, सून्दः; | | — |
| [1]उद्यमानः, | उन्द्यमानः, | उन्दिदिष्यमाणः; |
| [2]अवोदः, ओद्म, } उन्दः, | उन्दः, | उन्दिदिषः; |
| उन्दितुम्, | उन्दयितुम्, | उन्दिदिषितुम्; |
| उन्दा, | उन्दना, | उन्दिदिषा, उन्दिदयिषा; |
| उन्दनम्, | उन्दनम्, | उन्दिदिषणम्; |
| उन्दित्वा, | उन्दयित्वा, | उन्दिदिषित्वा; |
| समुद्य, | समुन्द्य, | समुन्दिदिष्य; |
| उन्दम् २, उन्दित्वा २, | उन्दम् २, उन्दयित्वा २, | उन्दिदिषम् २, उन्दिदिषित्वा २; |
| [3]इन्दुः, | [4]उदकम्-कः, | [5]ओदनम्. |

(108) "उन्भ पूरणे" (VI-तुदादिः-1320-सक. सेट्. पर.)

| | | |
|---|---|---|
| उम्भकः-म्भिका, | उम्भकः-म्भिका, | उम्बिभिषकः-षिका; |
| उम्भिता-त्री, | उम्भयिता-त्री, | उम्बिभिषिता-त्री; |
| [6]उम्भन्-न्ती-ती, | उम्भयन्-न्ती, | उम्बिभिषन्-न्ती; |
| उम्भिष्यन्-न्ती-ती, | उम्भयिष्यन्-न्ती-ती, | उम्बिभिषिष्यन्-न्ती-ती; |
| — | उम्भयमानः, | उम्भयिष्यमाणः; |
| उप्-उब्-उम्भौ-उम्भः; | — | — |
| उम्भितः-तम्-तवान्, | उम्भितः, तम्, | उम्बिभिषितः-तवान्; |
| उम्भः, उम्भः, | उम्बिभिषुः, | उम्बिभयिषुः; |

---

1. 'अनिदितां हल—' (6-4-24) इति नलोपः।
2. 'अवोदैधौद्मप्रश्रथहिमश्रथाः' (6-4-29) इत्यनेन अस्माद्धातोर्घञि नलोपः, मन्प्रत्यये नलोपः गुणश्च निपात्यते। अवोदः=ईषदार्द्रः। ओद्म=उन्दनम्।
3. 'उन्देरिच्चादेः' (द. उ. 1-197) इत्युः प्रत्ययः।
4. 'क्वुन् शिल्पिसंज्ञयोः' (द. उ. 3-5) इत्यौणादिकः क्वुन्।
5. 'उन्देर्नलोपश्च' (द. उ. 5-22) इत्यौणादिको युच्।
6. 'अनिदिताम्' (6-4-24) इति नलोपे 'शे तृम्फादीनां' (वा. 7-1-59) इति नुम्।

| | | |
|---|---|---|
| उम्मितव्यम्, | उम्भयितव्यम्, | उम्बिमिषितव्यम्; |
| उम्भनीयम्, | उम्भनीयम्, | उम्बिमिषणीयम्; |
| उम्म्यम्, | उम्म्यम्, | उम्बिमिष्यम्; |
| ईषदुम्भः, दुरुम्भः, सूम्भः; | | — |
| उम्यमानः, | उम्भ्यमानः, | उम्बिमिष्यमाणः; |
| उम्भः,[1] कुम्भः[A], | [2]अयस्कुम्भः, | [3]कुम्भी, उम्भः, उम्भिभिषः; |
| उम्भितुम्, | उम्भयितुम्, | उम्बिभिषितुम्; |
| उम्भा, उम्भना, | उम्बिमिषा, | उम्बिमयिषा; |
| उम्भनम्, | उम्भनम्, | उम्बिमिषणम्; |
| उम्भित्वा, | उम्भयित्वा, | उम्बिमिषित्वा; |
| समुम्य, | समुम्भ्य, | समुम्बिमिष्य; |
| उम्भम् २, उम्भित्वा २, | उम्भम् २, उम्भयित्वा २, | उम्बिमिषम् २; उम्बिमिषित्वा. |

## (104) "उभ पूरणे" (IV-तुदादिः-1319-सक. सेट्. पर.)

| | | |
|---|---|---|
| ओमकः-मिका, | ओमकः-मिका, | [4]ओबिभिषकः-षिका; |
| ओभिता-त्री, | ओभयिता-त्री, | ओबिभिषिता-त्री; |
| [5]उभन्-न्ती-ती, | ओभयन्-न्ती, | ओबिभिषन्-न्ती; |
| ओभिष्यन्-न्ती-ती, | ओभयिष्यन्-न्ती-ती, | ओबिभिषिष्यन्-न्ती ती; |
| — | ओभयमानः, | ओभयिष्यमाणः; |
| उप्-उब्-उभौ-उभः; | — | — |

1. केन उम्भ्यते=पूर्यते इति कुम्भः। कर्मणि घञ्। पृषोदरादित्वात् पररूपम्। 'अतः कृकमिकंसकुम्भ—' (8-3-46) इत्यत्र निपातनाद्वा पररूपम्।
2. 'अतः कृकमिकंस' (8-3-46) इति विसर्गस्य सत्वम्।
3. 'जातेरस्त्रीविषयात्' (4-1-63) इति ङीप्।
4. उपधाकार्यं द्वित्वात् प्रबलम् इति पूर्वं लघूपधगुणः। अनन्तरं द्वितीयैकाचः 'सन्यङोः' (6-1-9) इति द्वित्वम्।
5. शप्रत्ययस्य 'सार्वधातुकमपित्' (1-2-4) इति ङित्वात् लघूपधगुणो न।

A. 'पीयूषे भिन्नहेमकुम्भविद्रुमदण्डोऽम्भुम्भस्तथा रूपरूपपारपूतवेदंधविधितो णोभाः सुरसबोऽद्भुतः।' धा. का. 2-78.

| | | |
|---|---|---|
| [A]उभितः, उभितम्-तवान्, ओभितः-तम्, | | ओबिभिषितः-तवान्; |
| [1]उभौ, ओभः, | ओबिभिषुः, | ओबिभयिषुः; |
| ओभितव्यम्, | ओभयितव्यम्, | ओबिभिषितव्यम्; |
| ओभनीयम्, | ओभनीयम्, | ओबिभिषणीयम्; |
| ओभ्यम्, | ओभ्यम्, | ओबिभिष्यम्; |
| ईषदोभः, दुरोभः, स्वोभः; | | — |
| उभ्यमानः, | ओभ्यमानः, | ओबिभिष्यमाणः; |
| ओभः, | ओभः, | ओबिभिषः; |
| ओभितुम्, | ओभयितुम्, | ओबिभिषितुम्; |
| उभिः, | ओभना, | ओबिभिषा, ओबिभयिषा; |
| ओभनम्, | ओभनम्, | ओबिभिषणम्; |
| [2]ओभित्वा, | ओभयित्वा, | ओबिभिषित्वा; |
| प्रोभ्य, | प्रोभ्य, | प्रोबिभिष्य; |
| ओभम् २, ओभित्वा २, | ओभम् २, ओभयित्वा २, | ओबिभिषम् २; ओबिभिषित्वा २. |

## (105) "उब्ज आर्जवे" (VI-तुदादिः-1303-अक. सेट्. पर.)

| | | |
|---|---|---|
| उब्जकः-जिका, | उब्जकः-जिका, | [3]उब्जिजिषकः-जिषिका; |
| उब्जिता-त्री, | उब्जयिता-त्री, | उब्जिजिषिता-त्री; |
| उब्जन्-उब्जती-न्ती, | उब्जयन्-न्ती, | उब्जिजिषन्-न्ती; |

1. 'इगुपधज्ञा' (3-1-135) इति कः। नित्यद्विवचनान्तः।
2. 'न क्त्वा सेट्' (1-2-18) इति कित्त्वाभावात् गुणः।
3. 'हयवरट्' (माहेश्वरसूत्रम्-5) सूत्रस्थवार्तिकात् अस्योपध्मानीयोपधत्वं लभ्यते। तदा उपध्मानीयस्य शर्षु पाठात् झल्त्वेन 'झलां जश्' (8-4-53) इति जश्त्वेन बकारे यद्यपि—उब्जिता-उब्जितव्यम्-इत्यादिरूपाणि भवन्ति। तथापि उब्जिजिषकः-षिका इत्यादिरूपाणामसिद्धया दोपधपाठः भाष्यकृता आदृतः। "न न्द्राः" (6-1-3) इति दकारस्य द्वित्वनिषेधः। असिद्धे 'स्तोः श्चुना' (8-4-40) इत्यनन्तरं "भ उब्जेः" (वा. 8-4-40) इति दकारस्य भकारः।

A. 'पीयूषोभितदेवकुम्भविभ्रमदृसोजशुम्भत्तमा—' धा. का. 2-75.

| | | |
|---|---|---|
| ऊर्दिष्यमाणः, | ऊर्दयिष्यमाणः, | ऊर्दिदिषिष्यमाणः ; |
| [1]ऊर्द्-ऊर्दौ-ऊर्दः ; | — | — |
| ऊर्दितः-तम्-तवान्, ऊर्दितः-तं, | | ऊर्दिदिषितः-तवान् ; |
| ऊर्दः, [2]समूर्दी, | ऊर्दः, ऊर्दिदिषुः, | ऊर्दिदयिषुः ; |
| ऊर्दितव्यम्, | ऊर्दयितव्यम्, | ऊर्दिदिषितव्यम् ; |
| ऊर्दनीयम्, | ऊर्दनीयम्, | ऊर्दिदिषणीयम् ; |
| ऊर्घ्यम्, | ऊर्घ्यम्, | ऊर्दिदिष्यम् ; |
| ईषदूर्दः, दुरूर्दः, सूर्दः ; — | | — |
| ऊर्घ्यमानः, | ऊर्घ्यमानः, | ऊर्दिदिष्यमाणः ; |
| ऊर्दः, | ऊर्दः, | ऊर्दिदिषः ; |
| ऊर्दितुम्, | ऊर्दयितुम्, | ऊर्दिदिषितुम् ; |
| ऊर्दा, | ऊर्दना, | ऊर्दिदिषा, ऊर्दिदयिषा ; |
| [A]ऊर्दनम्, | ऊर्दनम्, | ऊर्दिदिषणम् ; |
| ऊर्दित्वा, | ऊर्दयित्वा, | ऊर्दिदिषित्वा ; |
| समूर्घ्य, | समूर्घ्य, | समूर्दिदिष्य ; |
| ऊर्दम् २, ऊर्दित्वा २, | ऊर्दम् २, ऊर्दयित्वा २, | ऊर्दिदिषम् २ ; ऊर्दिदिषित्वा २. |

(107) " उर्वी हिंसार्थः " (I-भ्वादिः-569-सक. सेट्. पर.)

| | | |
|---|---|---|
| [3]ऊर्वकः-र्विका, | ऊर्वकः-र्विका, | [4]ऊर्विविषकः-षिका ; |
| ऊर्विता-त्री, | ऊर्वयिता-त्री, | ऊर्विविषिता-त्री ; |
| ऊर्वन्-न्ती, | ऊर्वयन्-न्ती, | ऊर्विविषन्-न्ती ; |
| ऊर्विष्यन्-न्ती-ती, | ऊर्वयिष्यन्-न्ती-ती, | ऊर्विविषिष्यन्-न्ती-ती ; |

---

1. ' रात्सस्य ' (8-2-24) इति नियमात् दकारस्य ' संयोगान्त ' (8-2-23) लोपो न ।
2. ' सुप्यजातौ—' (3-2-78) इति ताच्छील्ये णिनिः ।
3. ' उपधायां च ' (8-2-78) इति दीर्घः ।
4. ' न न्द्राः संयोगादयः ' (6-1-3) इति रेफस्य द्वित्वनिषेधः ।

A. 'मुदा स चेतो ददृदे चिरं हरौ स्वादन् सुरैः स्वर्दितमञ्जलोर्दने । अकूर्दतेवास्य पुरः स्वसूर्दकैर्वनान्तमूर्दी रिपुगोदसूदसौ ॥' धा. का. 1-4.

| | | |
|---|---|---|
| — | ऊर्वयमाणः, | ऊर्वयिष्यमाणः ; |
| [1]ऊः-उरौ-उरः ; | — | — |
| [2]ऊर्णः-र्णम्[A]-र्णवान्, | ऊर्वितम्-तः, | ऊर्विविषितम्-तः-तवान्; |
| ऊर्वः, | ऊर्वः, ऊर्विविषुः, | ऊर्विवयिषुः ; |
| ऊर्वितव्यम्, | ऊर्वयितव्यम्, | ऊर्विविषितव्यम् ; |
| ऊर्वणीयम्, | ऊर्वणीयम्, | ऊर्विविषणीयम् ; |
| ऊर्व्यम्, | ऊर्व्यम्, | ऊर्विविष्यम् ; |
| ईषदूर्वः, दुरूर्वः, सूर्वः ; | — | — |
| ऊर्व्यमाणः, | ऊर्व्यमाणः, | ऊर्विविष्यमाणः ; |
| ऊर्वः, | ऊर्वः, | ऊर्विविषः, |
| ऊर्वितुम्, | ऊर्वयितुम्, | ऊर्विविषितुम् ; |
| ऊर्वा, | ऊर्वणा, | ऊर्विविषा, ऊर्विवयिषा; |
| ऊर्वणम्, | ऊर्वणम्, | ऊर्विविषणम् ; |
| ऊर्वित्वा, | ऊर्वयित्वा, | ऊर्विविषित्वा ; |
| समूर्व्य, | समूर्व्य, | समूर्विविष्य ; |
| ऊर्वम् २, ऊर्वित्वा २, | ऊर्वम् २, ऊर्वयित्वा २, | ऊर्विविषम् २ ; ऊर्विविषित्वा २. |

## (108) " उष दाहे " (I-भ्वादिः-696. सक. सेट्. पर.)

| | | |
|---|---|---|
| ओषकः-षिका, | ओषकः-षिका, | [3]ओषिषिषकः-षिका ; |
| ओषिता-त्री, | ओषयिता-त्री, | ओषिषिषिता-त्री ; |
| ओषन्-न्ती, | ओषयन्-न्ती, | ओषिषिषन्-न्ती ; |
| ओषिष्यन्-न्ती-ती, | ओषयिष्यन्-न्ती-ती, | ओषिषिषिष्यन्-न्ती-ती ; |

1. 'राल्लोपः' (6-4-21) इति वकारस्य लोपः। 'र्वोरुपधाया दीर्घ इकः' (8-2-76) इति दीर्घः।
2. 'श्वीदितः—' (7-2-14) इति इण्णिषेधः। 'राल्लोपः' (6-4-21) इति वलोपः। 'हलि च' (8-2-77) इति दीर्घः। 'रदाभ्यां—' (8-2-42) इति निष्ठानत्वम्। णत्वम्।
3. ओषेः ऋदित्करणात् लिङ्गात् उपधाकार्यं द्वित्वात् प्रबलम्। तेन गुणः।

A. 'प्रक्ष्यूतगोपीशुचमूर्णांपूतनं तूर्णानस्य थूर्णबकादिदानवम्। दुर्दर्विपून् धूर्वितुमेव गूर्वणं मूर्वन्तमापूर्वितपर्वताम्बरम्॥' धा. का. 1-73.

| | | |
|---|---|---|
| — | ओषयमाणः, | ओषयिष्यमाणः ; |
| उट्-उषौ-उषः ; | — | — |
| [1]प्रत्युष्टम् , उषितम् , ओषितम् , | तः, ओषितः-तम् , | ओषिषिषितः-तवान् ; |
| [2]उषः, | ओषः, | ओषिषिषुः, ओषिषयिषुः ; |
| ओषितव्यम् , | ओषयितव्यम् , | ओषिषिषितव्यम् ; |
| ओषणीयम् , | ओषणीयम् , | ओषिषिषणीयम् ; |
| ओष्यम् , | ओष्यम् , | ओषिषिष्यम् ; |
| ईषदोषः, दुरोषः, स्वोषः ; — | | — |
| उष्यमाणः, | ओष्यमाणः, | ओषिषिष्यमाणः ; |
| ओषः, | ओषः, | ओषिषिषः ; |
| ओषितुम् , | ओषयितुम् , | ओषिषिषितुम् ; |
| उष्टिः, व्युष्टिः, | ओषणा, | ओषिषिषा, ओषिषयिषा ; |
| ओषणम् , | ओषणम् , | ओषिषिषणम् ; |
| [3]ओषित्वा, | ओषयित्वा, | ओषिषिषित्वा ; |
| व्युष्य, | समोष्य, | समोषिषिष्य ; |
| ओषम् २, ओषित्वा २, | ओषम् २, ओषयित्वा २, | ओषिषिषम् २ ; ओषिषिषित्वा २; |
| [4]ऊष्मा, [5]उष्णः. | — | — |

1. 'उदुपधात्—' (1-2-21) इति कित्त्वविकल्पः। तेन रूपद्वयम्। 'प्रत्युष्टम्' इत्यत्र, 'आदितश्च' (7-2-16) इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् 'आश्वस्त' मितिवत् इट्प्रतिषेधः' इति भट्टभास्करः।' इति माधवधातुवृत्तौ।
2. 'इगुपधज्ञा—' (3-1-135) इति कर्तरि कः।
3. 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधाद्गुणः।
4. 'अन्येभ्योऽपि दृश्यन्ते' (3-2-75) इति मनिनि, बाहुलकाद्दीर्घः। 'नेड् वशि कृति' (7-2-8) इतीण्निषेधः।
5. औणादिके (द. उ. 5-35) नक्प्रत्यये उष्णः इति रूपं भवति। '...रेषोऽन्यान् भवतो नमोऽस्तु कमलाकोष्णास्तनं जोषते॥' धा. का. 1-87.

## (109) "उह्रि्र् अर्दने" (I-भ्वादिः-739-सक सेट्. पर.)

| | | |
|---|---|---|
| ओहकः-ह्रिका, | ओहकः-ह्रिका, | [1]ओजिहिषकः-षिका ; |
| ओह्रिता-त्री, | ओहयिता-त्री, | ओजिहिषिता-त्री ; |
| ओहन्-न्ती, | ओहयन्-न्ती, | ओजिहिषन्-न्ती ; |
| [A]ओहिष्यन्, प्रोहिष्यन्-न्ती-ती, | ओहयिष्यन्-न्ती-ती, | ओजिहिषिष्यन्-न्ती-ती ; |
| — | ओहयमानः, | ओहयिष्यमाणः ; |
| [2]उह्रितम्, ओह्रितम् -तः, | ओह्रितम्-तः, | ओजिहिषितम्-तः-तवान् ; |
| [3]समुद्-उड्-उह्रौ-उहः ; | — | — |
| उहः, | ओहः, ओजिहिषुः, | ओजिहयिषुः ; |
| ओह्रितव्यम्, | ओहयितव्यम्, | ओजिहिषितव्यम् ; |
| ओहनीयम्, | ओहनीयम्, | ओजिहिषणीयम् ; |
| ओह्यम्, | ओह्यम्, | ओजिहिष्यम् ; |
| ईषदोहः, दुरोहः, स्वोहः ; | — | — |
| उह्यमानः, | ओह्यमानः, | ओजिहिष्यमाणः ; |
| ओहः, | ओहः, | ओजिहिषः ; |
| ओह्रितुम्, | ओहयितुम्, | ओजिहिषितुम् ; |
| [4]ऊढिः, | ओहना, ओजिहिषा, | ओजिहयिषा ; |
| ओहनम्, | ओहनम्, | ओजिहिषणम् ; |
| ओह्रित्वा, | ओहयित्वा, | ओजिहिषित्वा ; |
| समुह्य, | समोह्य, | समोजिहिष्य ; |

---

1. 'कुहोश्चुः' (7-4-62) इति अभ्यासे चुत्वम् ।
2. 'उदुपधात् भावादिकर्मणोरन्यतरस्याम्' (1-2-21) इति कित्त्वविकल्पः । अन्यत्र नित्यमेव कित्त्वम्—उह्रितमित्येव ।
3. 'हो ढः' (8-2-31) इति ढत्वे चर्त्वविकल्पः ।
4. ढत्वधत्वष्टुत्वढलोपदीर्घाः ।

A. 'गोविन्दस्तुहिनाशुरम्यवदनः कंस जगद्रोह्रिनम् प्रोहिष्यन् जगदर्हणीयमहिमा मोदेन निन्ये निशाम् ॥' धा. का. 1-92.

| | | |
|---|---|---|
| ओहम् २, ओहित्वा २, | ओहम् २, ओहयित्वा २, | ओजिहिषम् २ ; ओजिहिषित्वा २. |

(110) "ऊठ उपघाते" (I-भ्वादिः-338-सक. सेट्. पर.)

| | | |
|---|---|---|
| [1]ऊठकः-ठिका, | ऊठकः-ठिका, | ऊटिठिषकः-षिका ; |
| ऊठिता-त्री, | ऊठयिता-त्री, | ऊटिठिषिता-त्री ; |
| ऊठन्-न्ती, | ऊठयन्-न्ती, | ऊटिठिषन्-न्ती ; |
| ऊठिष्यन्-न्ती-ती, | ऊठयिष्यन्-न्ती-ती, | ऊटिठिषिष्यन्-न्ती-ती ; |
| — | ऊठयमानः, | ऊठयिष्यमाणः ; |
| ऊट्-ऊठौ-ऊठः ; | — | — |
| ऊठितः-तं, | ऊठितः-तं, | ऊटिठिषितः-तवान् ; |
| ऊठः, | ऊठः, ऊटिठिषुः, | ऊटिठयिषुः ; |
| ऊठितव्यम्, | ऊठयितव्यम्, | ऊटिठिषितव्यम् ; |
| ऊठनीयम्, | ऊठनीयम्, | ऊटिठिषणीयम् ; |
| ऊठ्यम्, | ऊठ्यम्, | ऊटिठिष्यम् ; |
| ईषदूठः, दुरूठः, सूठः ; | — | — |
| ऊठ्यमानः, | ऊठ्यमानः, | ऊटिठिष्यमाणः ; |
| ऊठः, | ऊठः, | ऊटिठिषः ; |
| ऊठितुम्, | ऊठयितुम्, | ऊटिठिषितुम् ; |
| [2]ऊठा, ऊठना, | ऊटिठिषा, | ऊटिठयिषा ; |
| ऊठनम्, | ऊठनम्, | ऊटिठिषणम् ; |
| ऊठित्वा, | ऊठयित्वा, | ऊटिठिषित्वा ; |
| समूठ्य, | समूठ्य, | समूटिठिष्य ; |
| ऊठम् २, ऊठित्वा २, | ऊठम् २, ऊठयित्वा २, | ऊटिठिषम् २ ; ऊटिठिषित्वा २. |

(111) "ऊन परिहाणे" (X-चुरादिः-1889. सक.सेट्.उभ. अदन्तः.)

| | |
|---|---|
| ऊनकः-निका, | ऊनिनयिषकः-षिका ; |
| ऊनयिता त्री, | ऊनिनयिषिता-त्री ; |

---

1. 'उठ' इति ह्रस्वोपधपाठस्य पाठान्तरमिदम् ।
2. 'गुरोश्च हलः' (3-3-103) इति स्त्रियाम् अप्रत्ययः ।

| | |
|---|---|
| ऊनयन्-न्ती, | ऊनिनयिषन्-न्ती ; |
| ऊनयिष्यन्-न्ती-ती, | ऊनिनयिषिष्यन्-न्ती-ती ; |
| ऊनयमानः, | ऊनिनयिषमाणः ; |
| ऊनयिष्यमाणः, | ऊनिनयिषिष्यमाणः ; |
| [1]ऊः-ऊनौ-ऊनः ; | — |
| [2]ऊनितम्-तः-तवान्, | ऊनिनयिषितः-तवान् ; |
| ऊनः, मासोनः, | ऊनिनयिषुः ; |
| ऊनयितव्यम्, | ऊनिनयिषितव्यम् ; |
| [3]ऊननीयम्, | ऊनिनयिषणीयम् ; |
| ऊन्यम्, | ऊनिनयिष्यम् ; |
| ईषदूनः, दुरूनः, सूनः ; | — |
| ऊन्यमानः, | ऊनिनयिष्यमाणः ; |
| ऊनः, | ऊनिनयिषः ; |
| ऊनयितुम्, | ऊनिनयिषितुम् ; |
| ऊनना, | ऊनिनयिषा ; |
| ऊननम्, | ऊनिनयिषणम् ; |
| ऊनयित्वा, | ऊनिनयिषित्वा ; |
| समून्य, | समूनिनयिष्य ; |
| ऊनम् २, ऊनयित्वा २, | ऊनिनयिषम् २ ; ऊनिनयिषित्वा २. |

## (112) "ऊयी तन्तुसन्ताने" (1-भ्वादिः-483. सक. सेट्. आत्म.)

| | | |
|---|---|---|
| ऊयकः-यिका, | ऊयकः-यिका, | ऊयियिषकः-षिका ; |
| ऊयिता-त्री, | ऊययिता-त्री, | ऊयियिषिता-त्री ; |
| — | ऊययन्-न्ती, | ऊययिष्यन्-न्ती-ती ; |

1. ण्यन्तात् क्विपि णिलोपे 'पूर्वत्रासिद्धे न स्थानिवत्—' (वा. 1-1-58) इति स्थानिवद्भावनिषेधात् 'नलोपः प्रातिपदिकान्तस्य' (8-2-7) इति नलोपे प्रथमैकवचने एवं रूपम् ।
2. 'निष्ठायां सेटि' (6-4-52) इति णेर्लोपः ।
3. 'णेरनिटि' (6-4-51) इति णिलोपः ।

| | | |
|---|---|---|
| ऊयमानः, | ऊय्यमानः, | ऊयियिषमाणः ; |
| ऊयिष्यमाणः, | ऊययिष्यमाणः, | ऊयियिषिष्यमाणः ; |
| [1]ऊः-उवौ-उवः ; | — | — |
| [2]ऊतम्-तः[A], | ऊयितम्-तः-तवान्, | ऊयियिषितम्-तः-तवान् ; |
| ऊयः, | ऊयः, ऊयियिषुः, | ऊयियययिषुः ; |
| ऊयितव्यम्, | ऊययितव्यम्, | ऊयियिषितव्यम् ; |
| ऊयनीयम्, | ऊयनीयम्, | ऊयियिषणीयम् ; |
| ऊय्यम्, | ऊय्यम्, | ऊयियिष्यम् ; |
| ईषदूयः, दुरूयः, सूयः ; | — | — |
| ऊय्यमानः, | ऊय्यमानः, | ऊयियिष्यमाणः ; |
| ऊयः; | ऊयः, | ऊयियिषः ; |
| ऊयितुम्, | ऊययितुम्, | ऊयियिषितुम् ; |
| [3]ऊया, [4]ऊतिः, | ऊयना, | ऊयियिषा, ऊयियययिषा ; |
| ऊयनम्, | ऊयनम्, | ऊयियिषणम् ; |
| ऊयित्वा, | ऊययित्वा, | ऊयियिषित्वा ; |
| समूय्य, | समूय्य, | समूयियिष्य ; |
| ऊयम् २, ऊयित्वा २, | ऊयम् २, ऊययित्वा २, | ऊयियिषम् २ ; ऊयियिषित्वा २. |

(118) "ऊर्ज बलप्राणनयोः" (X-चुरादिः-1549-सक. सेट्. उभ.)

प्राणनम्=जीवनम् ।

| | |
|---|---|
| ऊर्जकः-र्जिका, | [5]ऊर्जिजयिषकः-यिषिका ; |
| ऊर्जयिता-त्री, | ऊर्जिजयिषिता-त्री ; |

---

1. 'लोपो व्योर्वलि' (6-1-66) इति यकारलोपः ।
2. ईदित्त्वान्निष्ठायामिण्णिषेधः । 'लोपो व्योर्वलि' (6-1-66) इति यलोपः ।
3. 'गुरोश्च हलः' (3-3-103) इति अः प्रत्ययः ।
4. बाहुलकात् क्तिन् । यलोपः । 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' (3-3-97) इति अन्तोदात्त ऊतिशब्दो यः निपातितः, सः अवतेर्धातोरिति बोध्यम् ।
5. 'न न्द्राः संयोगादयः' (6-1-3) इति रेफस्य द्विर्वचननिषेधात् जिशब्दस्य द्वित्वम् ।
A. 'प्रणम्य किंचित्स्मितो गृहान्तिकं ददर्श धन्यः ॥ दयान्वितमीदृशम् । गोदोहदेशे रचितं सहाग्रजं तमूनवत्कीर्तिमपूतिमिज्यैः ।' धा. का. 1-62.

## (114) " ऊर्णुञ् आच्छादने " (II-अदादिः-1039. सक. सेट्. उभ. )

[1]ऊर्णावकः-विका, ऊर्णावकः-विका, [2]ऊर्णुनविषकः-ऊर्णुनुविषकः-ऊर्णुनूषकः-षिका, [3]ऊर्णोनूयकः-यिका ;

[4]ऊर्णविता-ऊर्णुविता-त्री[A], ऊर्णावयिता-त्री, ऊर्णुनविषिता-ऊर्णुनुविषिता ऊर्णुनूषिता-त्री, ऊर्णोनूयिता-त्री ;

[5]ऊर्णुवन्-ऊर्णुवती, ऊर्णावयन्-न्ती, ऊर्णुनविषन् - ऊर्णुनुविषन्-ऊर्णुनूषन्-न्ती ;

[B]ऊर्णुवानः, ऊर्णावयमानः, ऊर्णुनविषमाणः-ऊर्णुनुविषमाणः-ऊर्णुनूषमाणः, ऊर्णोनूयमानः ;

ऊर्णविष्यमाणः-ऊर्णुविष्यमाणः, ऊर्णावयिष्यमाणः, ऊर्णुनविषिष्यमाणः-ऊर्णुनुविषिष्यमाणः-ऊर्णुनूषिष्यमाणः, ऊर्णोनूयिष्यमाणः ;

[6]ऊर्णुत्-ऊर्णुतौ-ऊर्णुतः ;

---

1. 'अचो ञ्णिति' (7-2-115) इति वृद्धौ, आवादेशः। एवं णिच्यपि सर्वत्र बोध्यम्।
2. 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' (7-2-49) इति सन इड्विकल्पः। इट्पक्षे 'विभाषोर्णोः' (1-2-3) इति इडादेः प्रत्ययस्य ङित्वं वैकल्पिकम्। ङित्वाभावपक्षे गुणावादेशयोः 'ऊर्णुनविषकः' इति रूपम्। ङित्वपक्षे उवङि 'ऊर्णुनुविषकः' इति रूपम्। इडभावपक्षे 'अज्झनगमां सनि' (6-4-16) इति दीर्घे 'इको झल्' (1-2-9) इति सनः कित्वे च 'ऊर्णुनूषकः' इति रूपम्। एवं सर्वत्र सन्नन्ते रूपत्रयस्योपपत्तिः।
3. 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यः—' (वा. 3-1-22) इति यङ्। 'सन्यङोः' (6-1-9) इति द्वितीयस्यैकाचः द्वित्वे 'गुणो यङ्लुकोः' (7-4-62) इत्यभ्यासस्य गुणे 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घे च रूपम्। एवं यङन्ते सर्वत्र बोध्यम्।
4. 'विभाषोर्णोः' (1-2-3) इति इडादिप्रत्ययस्य वैकल्पिकङिद्भावात् रूपद्वयम्। एवं तव्यदादिष्वपि ज्ञेयम्।
5. 'सार्वधातुकमपित्' (1-2-4) इति शतुर्ङिद्भावात् गुणाभावे, उवङि रूपम्। एवं 'ऊर्णुवान' इत्यत्रापि ज्ञेयम्।
6. क्विपि 'ह्रस्वस्य पिति कृति—' (6-1-71) इति तुक्। एवं ल्यप्यपि।

A. 'प्रोर्णुवित्री दिवस्तत्र पुरीं दशरथ काञ्चनीम् ॥' भ. का. 7-93.

B. 'दृष्ट्वोर्णुवानान् वपुषो बलीयान् विलङ्घ्य शत्रुं कवचं पिनह्य। ततो विसस्रुर्मयिनः शिवेतुः स्त्रीमिश्रिरक्षिप्रमुत्क्रीडमानः ॥' भ. का. 3-47.

[1]ऊर्णुतम्-[A]तः, ऊर्णावितं-तः, ऊर्णुनविषितः-ऊर्णुनुविषितः-ऊर्णुनूषितः, ऊर्णोनूयितः-तवान् ;

ऊर्णवः, ऊर्णावः, [B]ऊर्णुनविषुः-ऊर्णुनुविषुः-ऊर्णुनूषुः, ऊर्णुनावयिषुः, [2]ऊर्णोनुवः ;

ऊर्णवितव्यम्-ऊर्णुवितव्यम्, ऊर्णावयितव्यम्, ऊर्णुनविषितव्यम्-ऊर्णुनुविषितव्यम्-ऊर्णुनूषितव्यम्, ऊर्णोनूयितव्यम् ;

ऊर्णवनीयम्, ऊर्णावनीयम्, ऊर्णुनविषणीयम्-ऊर्णुनुविषणीयम्-ऊर्णुनूषणीयम्, ऊर्णोनूयनीयम् ;

[3]ऊर्णव्यम्-[4]अवश्योर्णाव्यम्, ऊर्णाव्यम्, ऊर्णुनविष्यम्-ऊर्णुनुविष्यम्-ऊर्णुनूष्यम्, ऊर्णोनूय्यम् ;

ईषदूर्णवः-दुरूर्णवः-सूर्णवः ;

[5]ऊर्णूयमानः, ऊर्णाव्यमानः, ऊर्णुनविष्यमाणः-ऊर्णुनुविष्यमाणः-ऊर्णुनूष्यमाणः, ऊर्णोनूय्यमानः ;

[6]ऊर्णवः, ऊर्णावः, ऊर्णुनविषः-ऊर्णुनुविषः-ऊर्णुनूषः, ऊर्णोनूयः ;

ऊर्णवितुम्-[C]ऊर्णुवितुम्, ऊर्णावयितुम्, ऊर्णुनविषितुम्-ऊर्णुनुविषितुम्-ऊर्णुनूषितुम्, ऊर्णोनूयितुम् ;

---

1. 'ऊर्णोतेर्विभाषा वाच्यः—' (वा. 7-2-11) इत्यतिदेशेन एकाच्त्वात् 'श्र्युकः किति' (7-2-11) इति इण्निषेधः। एवं क्तिनि क्त्वायां च ज्ञेयम्।
2. यङन्तात् पचाद्यचि, 'यङोऽचि च' (2-4-74) इति यङो लुकि, 'न धातुलोप आर्धधातुके' (1-1-4) इति गुणनिषेधे उवङि च रूपम्।
3. 'अचो यत्' (3-1-97) इति यति गुणे 'वान्तो यि प्रत्यये' (6-1-79) इति वान्तादेशे च रूपम्।
4. 'ओरावश्यके' (3-1-125) इति ण्यति वृद्धौ आवादेशे च रूपम्।
5. 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः।
6. 'ऋदोरप्' (3-3-57) इति भावे अप्।

A. 'केऽप्यस्परार्धं नुनुवुः खलेषु सुरक्षुतास्मानमसुं स्नुताक्षाः। सोऽनूर्णुतोऽधौज्जनम्नुत् कुवत्या काञ्च्येव कामं स्तुवतां ब्रुवाणः॥' धा. का. 2-47.
B. 'वानरं प्रोर्णुनविषुः शस्त्रैरक्षो विदिद्युते। तं प्रोर्णनूपुरुपले: सवृक्षैराबभौ कपिः॥' भ. का. 9-36.
C. 'यलं प्रोर्णुवितुं तूर्णं दिशं कुरुष्व दक्षिणाम्।' भ. का. 7-93.

ऊर्णुतिः, ऊर्णावना, ऊर्णुनविषा-ऊर्णुनुविषा-ऊर्णुनूषा, ऊर्णुनावयिषा, ऊर्णोनूया ;

ऊर्णवनम्, ऊर्णावनम्, ऊर्णुनविषणम्-ऊर्णुनुविषणम्-ऊर्णुनूषणम्, ऊर्णोनूयनम् ;

ऊर्णुत्वा, ऊर्णावयित्वा, ऊर्णुनविषित्वा-ऊर्णुनुविषित्वा-ऊर्णुनूषित्वा, ऊर्णोनूयित्वा ;

समूर्णुत्य, समूर्णाव्य, समूर्णुनविष्य - समूर्णुनुविष्य - समूर्णुनूष्य, समूर्णोनूय्य ;

ऊर्णावम् २, } ऊर्णावम् २, } ऊर्णुनविषम् २, } ऊर्णुनुविषम् २ ; }
ऊर्णुत्वा २, } ऊर्णावयित्वा २, } ऊर्णुनविषित्वा २, } ऊर्णुनुविषित्वा २; }

ऊर्णुनूषम् २- ऊर्णुनूषित्वा २, ऊर्णोनूयम् २- ऊर्णोनूयित्वा २ ;
[1]ऊर्णा, [2]ऊरुः.

(115) "ऊष रुजायाम्" (I-भ्वादिः-683. सक. सेट्. पर.)

'ऊठ उपघाते' (110) इति धातुवत् सर्वाणि रूपाणि ज्ञेयानि । [3]ऊष्मा, [4]ऊषणम् ऊषः[A]=पचाद्यच् ।

---

1. 'ऊर्णोतेर्डः' (द. उ. 5-64) इति डः प्रत्ययः । 'ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः' इत्यमरकोशव्याख्यायां सुधायां तु 'अन्येष्वपि दृश्यते' (3-2-101) इति डः —इति साधितम् । 'अन्येष्वपि दृश्यते' (3-2-101) इत्यत्र 'अपिशब्दः सर्वोपाधिव्यभिचारार्थः । तेन धात्वन्तरादपि कारकान्तरेष्वपि क्वचित्-परितः खाता=परिखा—' इति सिद्धान्तकौमुद्यामुक्तम् ।

2. ऊर्णूयते=आच्छाद्यते—इति कर्मणि 'ऊर्णोतेर्नुलोपश्च' (द. उ. 1-115) इति कुः प्रत्ययः । ऊरुः=सक्थि ।

3. 'अन्येभ्योऽपि दृश्यन्ते' (3-2-75) इति मनिन्प्रत्यये 'नेड् वशि कृति' (7-2-8) इतीण्निषेधः । ऊष्मा=उष्णम् ।

4. ऊषणम्=मरिचम् । ऊषणं=त्रिकटुकम्-इति क्षीरतरङ्गिण्याम् ।

A. 'ऊषन् दशोरम्रपूतमजूषक्षं भूषयन्नूषमतिर्विषभुजां प्रियः क्षमाम् ॥' धा. का. 1-56.

## (116) " ऊह वितर्के " (I-भ्वादिः-648. सक. सेट्. आत्म.)

वितर्कः=सम्भावना ।

| | | |
|---|---|---|
| ऊहकः-हिका, | ऊहकः-हिका, | [1]ऊजिहिषकः-पिका ; |
| ऊहिता-त्री, | ऊहयिता-त्री, | ऊजिहिषिता-त्री ; |
| समूहन्-न्ती, | ऊहयन्-न्ती, | — |
| [2]समूहिष्यन्-न्ती-ती, | ऊहयिष्यन्-न्ती-ती, | — |
| ऊहमानः, समूहमानः, | ऊहयमानः, | ऊजिहिषमाणः ; |
| ऊहिष्यमाणः, | ऊहयिष्यमाणः, | ऊजिहिषिष्यमाणः ; |
| ऊट्-ऊहौ-ऊहः ; | — | — |
| ऊहितम्-तः, | ऊहितः-तम्, | ऊजिहिषितः-तवान् ; |
| ऊहः, | ऊहः, | ऊजिहिषुः, ऊजिहयिषुः ; |
| ऊहितव्यम्, | ऊहयितव्यम्, | ऊजिहिषितव्यम् ; |
| ऊहनीयम्, | ऊहनीयम्, | ऊजिहिषणीयम् ; |
| ईषदूहः, दुरूहः, सूहः ; | — | — |
| [A]ऊह्यम्, [3]समूह्योऽग्निः, | ऊह्यम्, | ऊजिहिष्यम् ; |
| ऊह्यमानः, [4]निरुह्यमानः, समुह्यमानः, | ऊह्यमानः, | ऊजिहिष्यमाणः ; |
| ऊहः, [5]प्रौहः, | ऊहः, | ऊजिहिषः ; |
| ऊहितुम्, | ऊहयितुम्, | ऊजिहिषितुम् ; |
| ऊहा, | ऊहना, | ऊजिहिषा, ऊजिहयिषा ; |
| ऊहनम्, [6]प्रोहणम्, | ऊहनम्, | ऊजिहिषणम् ; |

---

1. 'कुहोश्चुः' (7-4-62) इति अभ्यासे हकारस्य चुत्वम् ।
2. 'उपसर्गादस्यत्यूह्योर्वावचनम्' (वा. 1-3-30) इति परस्मैपदं विकल्पेन ।
3. 'अग्नौ परिचाय्योपचाय्यसमूह्याः' (3-1-131) इति ण्यत्प्रत्ययान्तो निपातितः ।
4. 'उपसर्गाद्ध्रस्व ऊहतेः' (7-4-23) इति यादौ क्ङिति ह्रस्वः ।
5. 'प्रादूहोढ—' (वा. 6-1-89) इति वृद्धिः ।
6. 'कृत्यचः' (8-4-29) इति णत्वम् ।

A. 'द्रागाहतः शुभपथप्रकाशने सस्वजेऽथ तमनूह्यवैभवः । गाढमेत्यरसपृश्यमाणधीर्भूषण-ग्लहनघुंषितो बलः ॥' धा. का. 1-82.

ऊहित्वा, ऊहयित्वा, ऊजिहिषित्वा ;

समुह्य, निरुह्य, समूह्य, समूजिहिष्य ;

ऊहम् २, ऊहित्वा २, ऊहम् २, ऊहयित्वा २, ऊजिहिषम् २ ; ऊजिहिषित्वा २.

(117) "ऋ गतिप्रापणयोः" (I-भ्वादिः-936. सक. अनि. पर.)

'तत्रेयर्त्यृच्छतीत्यर्तेः, ऋ गतौ स्याद् ऋणाति च ।' (श्लो-30) इति देवः ।

[1]आरकः-रिका, [2]अर्पकः-र्पिका, [3]अरिरिषकः-षिका, [4]अरारकः-रिका ;
अर्ता-र्त्री, अर्पयिता-त्री, अरिरिषिता-त्री, अरारिता-त्री ;
[5]ऋच्छन्-न्ती, अर्पयन्-न्ती, अरिरिषन्-न्ती ; —
[6]अरिष्यन्-न्ती-ती, अर्पयिष्यन्-न्ती-ती, अरिरिषिष्यन्-न्ती-ती ;
[7]समृच्छमानः, अर्पयमाणः, [8]समरिरिषमाणः, अरार्यमाणः ;
समरिष्यमाणः, अर्पयिष्यमाणः, समरिरिषिष्यमाणः, अरारिष्यमाणः ;
[9]समृत्-समृतौ-समृतः ; — — —

1. 'अचो ञ्णिति' (7-2-115) इति वृद्धौ, 'उरण् रपरः' (1-1-51) इति रपरत्वे रूपम् ।
2. 'अर्तिह्रीव्ली–' (7-3-36) इति णौ पुगागमः । 'पुगन्तलघूपधस्य च' (7-1-86) इति गुणे रूपम् । एवं सर्वत्र ण्यन्ते बोध्यम् ।
3. 'स्मिपूङ्रञ्ज्वशां सनि' (7-2-74) इति सन इडागमः । गुणः । 'अजादेर्द्वितीयस्य' (6-1-2) इति 'रिस्' इत्यस्य द्वित्वम् । एवं सर्वत्र सन्नन्ते बोध्यम् ।
4. 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः' (वा. 3-1-22) इति यङ् । 'यङि च' (7-4-30) इति गुणे, द्वितीयस्यैकाचः 'र्य' इत्यस्य 'सन्यङोः' (6-1-9) इति द्वित्वे 'हलादिः शेषः' (7-4-60), 'दीर्घोऽकितः' (7-4-83) इत्यभ्यासस्य दीर्घे च रूपम् । 'न न्द्राः—' (6 1-3) इति रेफस्य द्वित्वनिषेधस्तु न भवति— 'अरार्यते' इति भाष्योदाहरणात् । एवं सर्वत्र यङन्ते बोध्यम् ।
5. शपि 'पाघ्राध्मास्थाम्नादाण्दृश्यर्ति—' (7-3-78) इत्यादिना ऋच्छादेशः ।
6. 'ऋद्धनोः स्ये' (7-2-70) इति स्यप्रत्ययस्येडागमः ।
7. अस्याकर्मकत्वे 'समो गम्यृच्छिभ्याम्' (1-3-29) इति शानच् प्रत्ययो भवति ।
8. 'पूर्ववत् सनः' (1-3-62) इति सन्नन्तात् शानच् ।
9. 'ह्रस्वस्य पिति कृति—' (6-1-71) इति तुगागमः ।

आरः, अर्पः, अरिरिपः, अरारः ;
अर्तुम्, अर्पयितुम्, अरिरिपितुम्, अरारितुम् ;
ऋतिः, [1]आर्तिः, [2]आरा, अर्पणा, अरिरिषा, अर्पिपयिषा, अरारा ;
अरणम्, अर्पणम्, अरिरिपणम्, अराररणम् ;
ऋत्वा, अर्पयित्वा, अरिरिपित्वा, अरारित्वा ;
समृत्य, समर्प्य, अमरिरिप्य, समरार्य ;
आरम् २ } अर्पम् २ } अरिरिपम् २ } अरारम् २ ; }
ऋत्वा २ } अर्पयित्वा २ } अरिरिपित्वा २ } अरारित्वा २ ; }
[3]अरुः, [4]अरणिः, [5]अरुणः, [6]अरण्यम्, [7]अर्थः, [8]अर्भकः,
[9]इरिणम्, [10]ऋतुः .

(118) " ऋ गतौ " (III—जुहोत्यादिः-1098. सक. अनि. पर. [अ]
' तत्रेयत्यृच्छतीरर्तेः, श्नि गतौ स्याद् ऋणाति तु ।' (श्लो-30) इति देवः ।
आरकः-रिका, [11]अर्पकः-र्पिका ;
अरिरिपकः-पिका, अरारकः-रिका ;

---

1. आङः ऋतिशब्देन समासे 'उपसर्गादृति धातौ' (6-1-91) इति वृद्धिः ।
2. 'आरा शस्त्र्याम्' (गणसूत्रम् भिदादौ 3-3-104) इति पाठात् वृद्धिः अङ् च ।
3. औणादिके (द. उ. 9-30) उसिप्रत्यये गुणः । अरुः=प्राणः आदित्यो वा ।
4. औणादिके (द. उ. 1-2) अनिप्रत्यये गुणः । अरणिः=अग्नियोनिः काष्ठविशेषः ।
5. औणादिकः (द. उ-5-50) उनन् प्रत्ययः । अरुणः=वैनतेयः अनूरुः सूर्यसारथिः ।
6. कर्मणि औणादिकः (द. उ-8-6) अन्यप्रत्ययः । अरण्यं=निर्जनस्थानम् ।
7. औणादिकः (द. उ-6-29) थन् प्रत्ययः । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः ।
8. औणादिके (द. उ. 3-50) अकप्रत्यये मुगागमः वयसि वाच्ये । अर्भकः बालः ।
9. औणादिकः (द. उ. 5-17) इनन् प्रत्ययः । तत्सन्नियोगेन प्रकृतेः इः आदेशः । 'उरण् रपरः' (1-1-51) इति रपरत्वम् । इरिणम्=अल्पोदकतृणस्थानम् ।
10. औणादिकः (द. उ. 1-124) तुः प्रत्ययः । तस्य च कित्त्वम् । तेन न गुणः । ऋतुः= वसन्तादिः कालविशेषः, स्त्रीणां पुष्पकालश्च ।
11. ण्यन्तात्-सन्नन्तात्-यङन्ताच्च सर्वाणि रूपाणि (117) ऋधातुवत् बोध्यानि ।
[अ]. 'अस्य च अर्तेः पृथग्गणितोऽपि, आरत्यामपि प्रयोग इष्यते । तत्र 'बहुलं छन्दसि' (7-4-78) इत्येव इत्वे सिद्धे, अर्तेः पृथगित्वविधानसामर्थ्यादयमपीष्यते' इति, 'अर्तिपिपर्त्योश्च' (7-4-77) इत्यत्र भाष्ये स्थितम् ॥' इति पुरुषकारे (पु. 31.) लीलाशुकेनोक्तम् ।

| | |
|---|---|
| अर्ता-र्त्री, | ईषदरः, दुररः, स्वरः, अर्यमाणः ; |
| [1]इयृत्-ती, | आरः ; |
| अरिष्यन्-न्ती-ती, | अर्तुम् ; |
| समृत्-समृतौ-समृतः, | आरा-ऋतिः,[2]आर्तिः ; |
| ऋतम्-तः-तवान्, | अरणम् ; |
| अरः, | ऋत्वा ; |
| अर्तव्यम्, | समृत्य ; |
| अरणीयम्, | आरम् २ ऋत्वा २ ; |
| अर्यः, आर्यः, | इति शुद्धाद्धातोः रूपाणि । |

## (119) "ऋच दीप्तौ" (VI-तुदादिः-1302. अक. सेट्. पर.)

'स्तुतौ' इत्यपि पाठः । 'वियोजनेऽर्चयेदर्चेद् यो, स्तुतावृचतीत्यृचेः ।' (श्लो-55) इति देवः ।

| | | |
|---|---|---|
| अर्चकः-र्चिका, | अर्चकः-र्चिका, | अर्चिचिषकः-षिका ; |
| अर्चिता-त्री, | अर्चयिता-त्री, | अर्चिचिषिता-त्री ; |
| [3]ऋचन्-ती,[A] | अर्चयन्-न्ती, | अर्चिचिषन्-न्ती ; |
| अर्चिष्यन्-न्ती-ती, | अर्चयिष्यन्-न्ती-ती, | अर्चिचिषिष्यन्-न्ती-ती ; |
| — | अर्चयमानः, अर्चयिष्यमाणः ; | — |
| ऋक्-ऋचौ-ऋचः ; | — | — |
| ऋचितम्-तः-तवान्, | अर्चितम्-तः, | अर्चिचिषितः-तवान् ; |
| [4]ऋचः, | अर्चः, | अर्चिचिषुः, अर्चिचयिषुः ; |
| अर्चितव्यम्, | अर्चयितव्यम्, | अर्चिचिषितव्यम् ; |

---

1. जुहोत्यादित्वात् 'श्लौ' (6-1-10) इति द्वित्वम् । 'अर्तिपिपर्त्योश्च' (7-4-77) इत्यभ्यासस्येत्त्वम् । 'अभ्यासस्यासवर्णे' (6-4-78) इतीयङ् । 'इको यणचि' (6-1-77) इति यण् । 'नाभ्यस्ताच्छतुः' (7-1-78) इति नुम्निषेधः ।
2. आरा शस्त्रे । अन्यत्र क्तिन् । 'उपसर्गादृति-' (6-1-91) इति वृद्धिः ।
3. 'तुदादिभ्यः शः' (3-1-77) इति शः विकरणप्रत्ययः । शप्रत्ययस्य 'सार्वधातुकमपित्' (1-2-4) इति ङिद्भावात् धातोः गुणो न ।
4. 'इगुपधज्ञाप्रीकिरः कः' (3-1-135) इति कः ।

A. 'नर्चन्ती कद्रु शंसती बुधजनं दोषं त्वचिलर्चती नित्यं भूपतिमुज्जनोज्झितमना यत्नास्त खल्या सुखम् ॥' धा. का. 2-73.

| | | |
|---|---|---|
| अर्चनीयम्, | अर्चनीयम्, | अर्चिचिषणीयम्; |
| [1]अर्च्यम्, | अर्च्यम्, | अर्चिचिष्यम्; |
| ईषदर्चः, दुरर्चः, स्वर्चः; | — | — |
| ऋच्यमानः, | अर्च्यमानः, | अर्चिचिष्यमाणः; |
| अर्चः, | अर्चः, | अर्चिचिषः; |
| अर्चितुम्, | अर्चयितुम्, | अर्चिचिषितुम्; |
| ऋक्तिः, | अर्चना, | अर्चिचिषा, अर्चिचयिषा; |
| अर्चनम्, | अर्चनम्, | अर्चिचिषणम्; |
| [2]अर्चित्वा, | अर्चयित्वा, | अर्चिचिषित्वा; |
| समृच्य, | समर्च्य, | समर्चिचिष्य; |
| अर्चम् २, अर्चित्वा २, | अर्चम् २, अर्चयित्वा २, | अर्चिचिषम् २; अर्चिचिषित्वा २. |

## (120) "ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु"

(VI-तुदादिः-1296. सक. सेट्. पर.)

इन्द्रियप्रलयः=सम्मोहः, मूर्तिभावः=काठिन्यम् ।

| | | |
|---|---|---|
| ऋच्छकः-च्छिका, | ऋच्छकः-च्छिका, | [3]ऋचिच्छिषकः-षिका; |
| ऋच्छिता-त्री, | ऋच्छयिता-त्री, | ऋचिच्छिषिता-त्री; |
| ऋच्छन्-[4]न्ती-ती, | ऋच्छयन्-न्ती, | ऋचिच्छिषन्-न्ती; |
| ऋच्छिष्यन्-न्ती-ती, | ऋच्छयिष्यन्-न्ती-ती, | ऋचिच्छिषिष्यन्-न्ती-ती; |
| [5]समृच्छमानः, | ऋच्छयमानः, | [6]समृचिच्छिषमाणः; |
| समृच्छिष्यमाणः, | ऋच्छयिष्यमाणः, | समृचिच्छिषिष्यमाणः; |

---

1. 'यजयाचरुचप्रवचर्चश्च' (7-3-66) इति ण्यति परतः कुत्वनिषेधसामर्थ्यात् 'ऋदुपधाच्चाक्लृपि—' (3-1-110) इति प्राप्तं क्यपं बाधित्वा ण्यदेव ।
2. 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधाल्लघूपधगुणः ।
3. चकारछकारयोर्द्वित्वे 'हलादिः शेषः' (7-4-60) इति चकारस्य शेषः ।
4. 'आच्छीनद्योर्नुम्' (7-1-80) इति वा नुम् ।
5. 'समो गम्यृच्छिभ्याम्—' (1-3-29) इति सम्पूर्वकात् शानच् ।
6. 'पूर्ववत् सनः' (1-3-62) इति आत्मनेपदी ।

[1]समृट्-समृड्-समृच्छौ-समृच्छः ; — —

| | | |
|---|---|---|
| ऋच्छितम्-तः, | ऋच्छितम्-तः, | ऋचिच्छिषितः-तवान् ; |
| ऋच्छः, [2]उपार्च्छः, | ऋचिच्छिषुः, | ऋचिच्छयिषुः ; |
| ऋच्छितव्यम्, | ऋच्छयितव्यम्, | ऋचिच्छिषितव्यम् ; |
| ऋच्छनीयम्, | ऋच्छनीयम्, | ऋचिच्छिषणीयम् ; |
| ऋच्छ्यम्, | ऋच्छ्यम्, | ऋचिच्छिष्यम् ; |
| ईषदृच्छः, दुरृच्छः, स्वृच्छः ; | | — |
| ऋच्छ्यमानः, | ऋच्छ्यमानः, | ऋचिच्छिष्यमाणः ; |
| ऋच्छः, | ऋच्छः, | ऋचिच्छिषः ; |
| ऋच्छितुम्, | ऋच्छयितुम्, | ऋचिच्छिषितुम् ; |
| ऋच्छा, | ऋच्छना, | ऋचिच्छिषा ; ऋचिच्छयिषा ; |
| ऋच्छनम्, | ऋच्छनम्, | ऋचिच्छिषणम् ; |
| ऋच्छित्वा, | ऋच्छयित्वा, | ऋचिच्छिषित्वा ; |
| समृच्छ्य, | समृच्छ्य, | समृचिच्छिष्य ; |
| ऋच्छम् २, ऋच्छित्वा २, | ऋच्छम् २, ऋच्छयित्वा २, | ऋचिच्छिषम् २; ऋचिच्छिषित्वा २. |

## (121) "ऋज गतिस्थानार्जनोपार्जनेषु"

(I-भ्वादिः-176. सक. सेट्. आत्म.)

'ऊर्जनेषु' इति क्षीरस्वाम्यादीनां पाठः। ऊर्जनम्=शक्तिप्राप्तिः प्राणनं वेति धातुकाव्ये। 'ऋजते अर्जने, गत्याद्यर्थे स्यादर्जते स्वर्जेः।' (श्लो-62) इति देवः।

| | | |
|---|---|---|
| [A]अर्जकः-र्जिका, | अर्जकः-र्जिका, | अर्जिजिषकः-षिका ; |
| अर्जिता-त्री, | अर्जयिता-त्री, | अर्जिजिषिता-त्री ; |
| — | अर्जयन्-न्ती, | अर्जयिष्यन्-न्ती-ती ; |

1. 'छ्वोः शूडनुनासिके च' (6-4-19) इति सतुकस्य छकारस्य शकारे 'व्रश्चभ्रस्ज–' (8-2-36) इति षत्वम्। जश्त्वविकल्पः।
2. 'उपसर्गादृति धातौ' (6-1-91) इति वृद्धिः।

A. 'अमुघनैर्मंक्षितचित्तधक्षितत्रमीमतश्रस्तुचितैस्त्युभार्जकैः। समृजितं कन्दममूक्तसत्फलान्यदद्भिरेकत्र यदेजितं जनैः॥' धा. का. 1. 24.

| | | |
|---|---|---|
| अर्जमानः, | अर्जयमानः, | अर्जिजिषमाणः ; |
| अर्जिष्यमाणः, | अर्जयिष्यमाणः, | अर्जिजिषिष्यमाणः ; |
| ऋक्-ऋग्-ऋजौ-ऋजः ; | — | — |
| ऋजितम्-तः-तवान्, [1]उपार्जितः, | अर्जितः-तम्, | अर्जिजिषितः-तवान् ; |
| ऋजः, | अर्जः, | अर्जिजिषुः, अर्जिजयिषुः ; |
| अर्जितव्यम्, | अर्जयितव्यम्, | अर्जिजिषितव्यम् ; |
| अर्जनीयम्, | अर्जनीयम्, | अर्जिजिषणीयम् ; |
| [2]ऋज्यम्, | अर्ज्यम्, | अर्जिजिष्यम् ; |
| ईषदर्जः, दुरर्जः, स्वर्जः ; | — | — |
| ऋज्यमानः, | अर्ज्यमानः, | अर्जिजिष्यमाणः ; |
| अर्जः, [3]स्वर्गः, | अर्जः, | अर्जिजिषः ; |
| अर्जितुम्, | अर्जयितुम्, | अर्जिजिषितुम् ; |
| ऋक्तिः, | अर्जना, | अर्जिजिषा, अर्जिजयिषा ; |
| अर्जनम्, | अर्जनम्, | अर्जिजिषणम् ; |
| [4]अर्जित्वा, | अर्जयित्वा, | अर्जिजिषित्वा ; |
| समृज्य, | समर्ज्य, | समर्जिजिष्य ; |
| अर्जम् २, अर्जित्वा २, | अर्जम् २, अर्जयित्वा २, | अर्जिजिषम् २ ; अर्जिजिषित्वा २. |

(122) "ऋजि भर्जने" (I-भ्वादिः-177. सक. सेट्. आत्म.)

भर्जनम्=पाकविशेषः ।

'ऋञ्जते भर्जने, गत्यार्थे स्यादर्जने त्वृजेः ।' (श्लो-62) इति देवः ।

---

1. 'उपसर्गादृति धातौ' (6-1-91) इति वृद्धिः ।
2. 'ऋदुपधाच्च—' (3-1-110) इति भावकर्मणोः क्यप् ।
3. 'सुष्ठु ऋज्यते=स्थीयते अस्मिन्—इत्यधिकरणे संज्ञायां 'हलश्च' (3-3-121) इति घञ् । न्यङ्क्वादित्वात् (7-3-53) कुत्वम् ।' इति अमरसुधा । निष्ठायां सेट्त्वात् अर्ज इत्यत्र कुत्वं न ।
4. 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधाद्गुणः ।

| | | |
|---|---|---|
| [1]ऋञ्जकः-ञ्जिका, | ऋञ्जकः-ञ्जिका, | [2]ऋञ्जिजिषकः-षिका ; |
| ऋञ्जिता-त्री, | ऋञ्जयिता-त्री, | ऋञ्जिजिषिता-त्री ; |
| — | ऋञ्जयन्-न्ती, | ऋञ्जयिष्यन्-न्ती-ती ; |
| ऋञ्जमानः, | ऋञ्जयमानः, | ऋञ्जिजिषमाणः ; |
| ऋञ्जिष्यमाणः, | ऋञ्जयिष्यमाणः, | ऋञ्जिजिषिष्यमाणः ; |
| ऋन्-ऋञ्जौ-ऋञ्जः ; | — | — |
| [A]ऋञ्जितः-तं-तवान्, | ऋञ्जितं-तः, | ऋञ्जिजिषितः-तवान् ; |
| ऋञ्जः, | ऋञ्जः, | ऋञ्जिजिषुः, ऋञ्जिजयिषुः ; |
| ऋञ्जितव्यम्, | ऋञ्जयितव्यम्, | ऋञ्जिजिषितव्यम् ; |
| ऋञ्जनीयम्, | ऋञ्जनीयम्, | ऋञ्जिजिषणीयम् ; |
| [3]ऋञ्ज्यम्, | ऋञ्ज्यम्, | ऋञ्जिजिष्यम् ; |
| ईषदृञ्जः, दुरृञ्जः, स्वृञ्जः ; | | — |
| [4]ऋज्यमानः, | ऋञ्ज्यमानः, | ऋञ्जिजिष्यमाणः ; |
| ऋञ्जः, | ऋञ्जः, | ऋञ्जिजिषः ; |
| ऋञ्जितुम्, | ऋञ्जयितुम्, | ऋञ्जिजिषितुम् ; |
| ऋञ्जा, | ऋञ्जना, | ऋञ्जिजिषा, ऋञ्जिजयिषा ; |
| ऋञ्जनम्, | ऋञ्जनम्, | ऋञ्जिजिषणम् ; |
| ऋञ्जित्वा, | ऋञ्जयित्वा, | ऋञ्जिजिषित्वा ; |
| समृज्य, | समृञ्ज्य, | समृञ्जिजिष्य ; |
| ऋञ्जम् २, ऋञ्जित्वा २, | ऋञ्जम् २, ऋञ्जयित्वा २, | ऋञ्जिजिषम् २; ऋञ्जिजिषित्वा २. |

1. 'इदितो नुम् धातोः' (7-1-58) इति नुम्।
2. 'न न्द्राः-(6-1-3) इति नकारस्य द्वित्वनिषेधः।
3. निष्ठायां सेट्त्वात् 'चजोः कु—' (7-3-52) इति कुत्वं न।
4. अस्य धातोरिदित्वात् 'अनिदितां हल—' (6-4-24) इति नलोपो न।

A. 'अमुधनैर्मथितचित्तपथितलयीमतप्रस्तुचितैः शुभार्थकैः।
समृञ्जितं कन्दमृक्सत्फलान्यदद्भिरेकत्र यदेजितं जनैः॥' धा. का. 1. 24.

## (123) " ऋणु गतौ " (VIII-तनादिः-1467. सक. सेट्. उभ.)

| | | |
|---|---|---|
| [1]अर्णकः-र्णिका, | अर्णकः-र्णिका, | [2]अर्णिनिषकः-षिका ; |
| अर्णिता-त्री, | अर्णयिता-त्री, | अर्णिनिषिता-त्री ; |
| [3]अर्णुवन्-वती, | अर्णयन्-न्ती, | अर्णिनिषन्-न्ती ; |
| अर्णिष्यन्-न्ती-ती, | अर्णयिष्यन् - न्ती-ती, | अर्णिनिषिष्यन्-न्ती-ती ; |
| [A]अर्णुवानः, | अर्णयमानः, | अर्णिनिषमाणः ; |
| अर्णिष्यमाणः, | अर्णयिष्यमाणः, | अर्णिनिषिष्यमाणः ; |
| [4]ऋत्-ऋतौ-ऋतः ; | — | — |
| [5]ऋतम्-ऋतः-ऋतवान्, | अर्णितः-तः, | अर्णिनिषितः-तवान् ; |
| [6]ऋणः, अर्णः, | अर्णिनिषुः, | अर्णिनयिषुः ; |
| अर्णितव्यम्, | अर्णयितव्यम्, | अर्णिनिषितव्यम् ; |
| अर्णनीयम्, | अर्णनीयम्, | अर्णिनिषणीयम् ; |
| [7]ऋण्यम्, | अर्ण्यम्, | अर्णिनिष्यम् ; |
| ईषदर्णः-दुरर्णः-स्वर्णः ; | — | — |
| अर्ण्यमानः, | अर्ण्यमाणः, | अर्णिनिष्यमाणः ; |

---

1. 'पुगन्तलघूपधस्य—' (7-3-86) इति गुणः ।
2. धातुरयं नकारान्तः, णत्वं तु लाक्षणिकम् । अतः, 'नि' शब्दस्यैव 'सन्यङोः' (6-1-9) इति द्वित्वम् । पूर्वखण्डे रेफात् परत्वात् णत्वम्, उत्तरखण्डे तु नकारस्यैव श्रवणम् । 'पूर्वत्रासिद्धमद्विर्वचने' (वा. 1-1-59) इति [illegible] न ; 'उभौ साभ्यासस्य' (8-4-21) इति लिङ्गात् तस्यानित्यत्वात् । एवं सन्नन्ते सर्वत्र बोध्यम् ।
3. 'तनादिकृञ्भ्य उः' (3-1-79) इति उः विकरणप्रत्ययः । विकरणनिमित्तके गुणे, उवङि च रूपम् । आत्रेयादयस्तु 'संज्ञापूर्वको विधिरनित्यः' इत्यङ्गीकृत्य *'ऋण्वन्-ण्वती'* इति गुणरहिततया रूपं साधयन्ति । तत्र भाष्यानुग्रहो नास्ति ।
4. 'अनुदात्तोपदेशवनतितनोत्यादीनाम्—' (6-4-37) इति अनुनासिकलोपे तुक् ।
5. उदित्वात् क्त्वायामिड्विकल्पात् 'यस्य विभाषा' (7-2-15) इति निष्ठायां इण्णिषेधः । अनुनासिकलोपः । एवं क्तिनि, इडभावपक्षे क्त्वाप्रत्यये च बोध्यम् ।
6. 'इगुपधज्ञा—' (3-1-135) इति कर्तरि कः ।
7. 'ऋदुपधाच्चाक्लृपि—' (3-1-110) इति क्यप् ।

A. 'तन्वन् स मधुभुवि सावरमः स्वबन्धून् अक्षण्वतां क्षितिकरो मुदमर्णुवानः ।
कंसस्तृणीकृतरिपुर्घृणिमान् वतासि मन्वान एकमथ मध्यमलञ्चकार ॥'
धा. का. 3. 4.

| | | |
|---|---|---|
| अर्णः, [1]स्वर्णम्, | अर्णः, | अर्णिनिषः ; |
| अर्णितुम्, | अर्णयितुम्, | अर्णिनिषितुम् ; |
| ऋतिः, | अर्णना, अर्णिनिषा, | अर्णिनयिषा ; |
| अर्णनम्, | अर्णनम्, | अर्णिनिषणम् ; |
| [2]अर्णित्वा-ऋत्वा, | अर्णयित्वा, | अर्णिनिषित्वा ; |
| [3]समृत्य, [4]प्रार्त्य, | समर्ण्य, | समर्णिनिष्य ; |
| अर्णम् २, अर्णित्वा २, ऋत्वा २, | अर्णम् २, अर्णयित्वा २, | अर्णिनिषम् २ ; अर्णिनिषित्वा २. |

## (124) "ऋतिः" (I-भ्वादिः-1010-A. अक. सेट्. आत्म.)

धातुपाठेऽपठितोऽपि सूत्रेऽनुवादात् धातुत्वं बोध्यम्। घृणायां वर्तते इति केचित्। जुगुप्सायामयं धातुरिति बहवः।

| | | |
|---|---|---|
| [5]ऋतीयकः-यिका, अर्तकः-र्तिका, | ऋतीयकः-यिका, अर्तकः-र्तिका, | [6]ऋतितीयिषकः-षिका ; अर्तितिषकः-षिका ; |
| ऋतीयिता, अर्तिता -त्री, | [7]ऋतीययिता, अर्तयिता -त्री, | ऋतितीयिषिता, अर्तितिषिता -त्री ; |
| — | ऋतीययन्-न्ती, अर्तयन्-न्ती, | अर्तितिषन्-न्ती ; |

---

1. 'हलश्च' (3-3-121) इति संज्ञायां घञ्। 'लिङ्गमशिष्यं, लोकाश्रयत्वाल्लिङ्गस्य' इति न्यायात् नपुंसकलिङ्गत्वम्।
2. 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः। इट्पक्षे 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधाद् गुणः।
3. 'वा ल्यपि' (6-4-38) इत्यत्र व्यवस्थितविभाषाश्रयणात् अनुनासिकलोपो नित्यः। तुक्।
4. 'उपसर्गादृति धातौ' (6-1-91) इति वृद्धिरेकादेशः।
5. 'ऋतेरीयङ्' (3-1-29) इति स्वार्थे ईयङ् प्रत्ययः। 'सनाद्यन्ता धातवः' (3-1-32) इति ईयङन्तस्य धातुत्वम्। ततो ण्वुलादयः। ईयङ् प्रत्ययः 'आयादय आर्धधातुके वा' (3-1-31) इति विकल्पेन भवति। ततश्च 'अर्तकः—' इत्यादीनि रूपाणि पक्षे बोध्यानि। एवं णिजन्तात् सन्नन्तादपि आयप्रत्ययस्य वैकल्पिकत्वं ज्ञेयम्।
6. ईयङो ङित्त्वाल्लघूपधगुणाभावे, अजादित्वेन द्वितीयस्यैकाचः 'ती' इत्यस्य द्वित्वे, अभ्यासह्रस्वत्वे च रूपम्। एवं सर्वत्र सन्नन्ते ज्ञेयम्।
7. णिचः गुणायादेशयोः एवं रूपम्।

| | | |
|---|---|---|
| [1]अर्तिष्यन्-न्ती-ती, | ऋतीययिष्यन्-न्ती-ती,<br>अर्तयिष्यन्-न्ती-ती, | अर्तितिषिष्यन्-न्ती-ती ; |
| ऋतीयमानः, | ऋतीययमानः,<br>अर्तयमानः | ऋतितीयिषमाणः ; |
| ऋतीयिष्यमाणः, | ऋतीययिष्यमाणः,<br>अर्तयिष्यमाणः, | ऋतितीयिषिष्यमाणः ; |
| [2]ऋतीः-ऋत्यौ-ऋत्यः, | ऋत्-ऋतौ-ऋतः ; | — |
| ऋतीयितम्-तः-तवान्,<br>ऋतितम्-तः-तवान्, | ऋतीयितं-तः,<br>अर्तितम्-तः, | ऋतितीयिषितः-तवान् ;<br>अर्तितिषितः-तवान् ; |
| ऋतीयः ऋतीयः<br>ऋतः अर्तः | ऋतितीयिषुः-अर्तितिषुः ; | — |
| ऋतीयितव्यम्,<br>अर्तितव्यम्, | ऋतीययितव्यम्,<br>अर्तयितव्यम्, | ऋतितीयिषितव्यम् ;<br>अर्तितिषितव्यम् ; |
| ऋतीयनीयम्,<br>अर्तनीयम्, | [3]ऋतीयनीयम्,<br>अर्तनीयम्, | ऋतितीयिषणीयम् ;<br>अर्तितिषणीयम् ; |
| [4]ऋतीय्यम्,<br>ऋत्यम्, | ऋतीय्यम्,<br>अर्त्यम्, | ऋतितीयिष्यम्-अर्तितिष्यम् ; |
| ऋतीय्यमानः,<br>ऋत्यमानः, | ऋतीय्यमानः,<br>अर्त्यमानः, | ऋतितीयिष्यमाणः;<br>अर्तितिष्यमाणः ; |

ईषदृतीयः-दुरृतीयः-स्वृतीयः, ईषदर्तः-दुरर्तः-स्वर्तः ;

| | | |
|---|---|---|
| ऋतीयः,<br>अर्तः, | ऋतीयः,<br>अर्तः, | ऋतितीयिषः-अर्तितिषः ; |
| ऋतीयितुम्,<br>अर्तितुम्, | ऋतीययितुम्,<br>अर्तयितुम्, | ऋतितीयिषितुम् ;<br>अर्तितिषितुम् ; |

---

1. ईयङभावे 'शेषात् कर्तरि—' (1-3-78) इति लटः शता ।
2. ईयङन्तात् क्विपि, अतो लोपे, वलि लोपे च एवं रूपम् । ईयङभावे 'ऋत्' इति रूपम् ।
3. 'णेरनिटि' (6-4-51) इति णिलोपः ।
4. ईयङन्तात् 'अचो यत्' (3-1-97) इति यति द्वियकारघटितं रूपम् । ईयङभाव-पक्षे 'ऋदुपधात्—' (3-1-110) इति क्यपि रूपम् ।

| | | |
|---|---|---|
| [1]ऋतीया, ऋत्तिः, | ऋतीयना, अर्तना, | ऋतितीयिषा ; अर्तितिषा , |
| ऋतीयनम् , अर्तनम् , | ऋतीयनम् , अर्तनम् , | ऋतितीयिषणम् ; अर्तितिषणम् ; |
| ऋतीयित्वा, [2]अर्तित्वा-ऋतित्वा, | ऋतीययित्वा, अर्तयित्वा, | ऋतितीयिषित्वा ; अर्तितिषित्वा ; |
| समृतीय्य, समृत्य, | समृतीय्य, समर्त्य, | समृतितीयिष्य ; समर्तितिष्य ; |
| ऋतीयम् २, ऋतीयित्वा २, अर्तम् २, अर्तित्वा २, ऋतित्वा २, | ऋतीयम् २, अर्तम् २, ऋतीययित्वा २, अर्तयित्वा २, | ऋतितीयिषम् २ ; ऋतितीयिषित्वा २; अर्तितिषम् २ ; अर्तितिषित्वा २. |

## (125) " ऋधु वृद्धौ " (IV - दिवादिः-1245. सक. सेट्. पर.)

'ऋध्नोतीति भवेद् वृद्धावृध्यतीत्यत्र तु श्यनि।' (श्लो-122) इति देवः।

अर्धकः-र्धिका, अर्धकः-र्धिका, अर्दिधिषकः-षिका, [3]ईर्त्सकः-र्त्सिका ;
अर्धिता-त्री, अर्धयिता-त्री, अर्दिधिषिता-त्री, ईर्त्सिता-त्री ;
ऋध्यन्-न्ती, अर्धयन्-न्ती, अर्दिधिषन्-न्ती, ईर्त्सन्-न्ती ;
अर्धिष्यन्-न्ती-ती, अर्धयिष्यन्-न्ती-ती, अर्दिधिषिष्यन्-न्ती-ती, ईर्त्सिष्यन्-न्ती;
— अर्धयमानः, अर्धयिष्यमाणः ; —
ऋत ऋध्-ऋधौ-ऋधः ; — — —
[4]ऋद्धम्-द्धः-द्धवान् , अर्धितः-तं, अर्दिधिषितः-ईर्त्सितः-तवान् ;

---

1. 'अ प्रत्ययात्' (3-3-102) इति ईयङन्तादकारः प्रत्ययः।
2. 'वञ्चिलुञ्च्यृतश्च' (1-2-24) इति क्त्वायाः कित्त्वविकल्पः। तेन कदाचित् गुणः, कदाचिन्न गुणः।
3. 'सनीवन्तर्ध-' (7-2-49) इतीड्विकल्पः। 'आप्ज्ञप्यृधामीत्' (7-4-55) इति ईत्वम्। 'अत्र लोपोऽभ्यासस्य' (7-4-58) इत्यभ्यासलोपः।
4. उदित्वात्, निष्ठायां 'यस्य विभाषा' (7-2-15) इतीडभावः।

| | | | |
|---|---|---|---|
| [1]ऋधः, अर्धः, | [A]अर्दिधिषुः, | [A]ईर्त्सुः, अर्दिधयिषुः ; | |
| अर्धितव्यम्, | अर्धयितव्यम्, | अर्दिधिषितव्यम्, | ईर्त्सितव्यम्; |
| अर्धनीयम्, | अर्धनीयम्, | अर्दिधिषणीयम्, | ईर्त्सनीयम्; |
| [2]ऋद्ध्यम्, | अर्ध्यम्, | अर्दिधिष्यम्, | ईर्त्स्यम्; |
| ईषदर्धः, दुरर्धः, स्वर्धः ; | | — | — |
| ऋध्यमानः, | अर्ध्यमानः, | अर्दिधिष्यमाणः, | ईर्त्स्यमानः; |
| अर्धः, | अर्धः, | अर्दिधिषः, | ईर्त्सः; |
| अर्धितुम्, | अर्धयितुम्, | अर्दिधिषितुम्, | ईर्त्सितुम्; |
| [B]ऋद्धिः, | अर्धना, | अर्दिधिषा, | ईर्त्सा, अर्दिधयिषा; |
| अर्धनम्, | अर्धनम्, | अर्दिधिषणम्, | ईर्त्सनम्; |
| [3]अर्धित्वा / ऋद्ध्वा | अर्धयित्वा, | अर्दिधिषित्वा, | ईर्त्सित्वा; |
| समृद्ध्य, | समर्ध्य, | समर्दिधिष्य, | समीर्त्स्य; |
| अर्धम् २, अर्धित्वा, ऋद्ध्वा २, | अर्धम् २, अर्धयित्वा २, | अर्दिधिषम् २, अर्दिधिषित्वा २, | ईर्त्सम् २; ईर्त्सित्वा २. |

(126) "ऋधु वृद्धौ" (V-स्वादिः-1271. अक. सेट्. पर.)

'ऋध्नोतीति भवेद् वृद्धौ ऋध्यतीत्यत्र तु श्यनि।' (श्लो. 122) इति देवः।

अस्य धातोः पूर्वोक्त (125) दैवादिक ऋधुधातुवत् सर्वत्र रूपाणि ज्ञेयानि। शतरि परं ऋध्नुवन्-वती, इति रूपमिति विशेषः। स्वादित्वात्

---

1. 'इगुपधज्ञाप्रीकिरः कः' (3-1-135) इति कर्तरि कः।
2. 'ऋदुपधाच्चाक्लृपिचृतेः' (3-1-110) इति क्यप्।
3. क्त्वायां 'उदितो वा' (7-3-56) इतीड्विकल्पः। सेटः क्त्वायाः 'न क्त्वा सेट्' (1-2-18) इति कित्वं न।

A. 'शस्त्रैर्दिदेविषुं संख्ये दुधूषुः परिघं कपिः। अर्दिधिषुः यशः कीर्तिं ईर्त्सुं वृक्षैरताडयत्॥' भ. का. 9. 32.

B. 'नभ्यांस्तुभ्य विभो जयेति नुवते क्षियन् प्रमेयद्युजं क्षिवयन् ऋद्धिम् भगृध्नवेऽपि स विम्रस्याशीयमानां ददौ॥' धा. का. 2. 67.

'स्वादिभ्यः श्नुः' (3-1-73) इति श्नुः प्रत्ययः। श्नुप्रत्ययस्य 'सार्वधातुकमपित्' (1-2-4) इति ङिद्वद्भावातिदेशाव् गुणो न। उवङ्।

## (127) "ऋन्फ हिंसायाम्" (VI-तुदादिः-1316. सक. सेट्. पर.)

| | | |
|---|---|---|
| ऋम्फकः-म्फिका, | ऋम्फकः-म्फिका, | ऋम्पिफिषकः-षिका ; |
| ऋम्फिता-त्री, | ऋम्फयिता-त्री, | ऋम्पिफिषिता-त्री ; |
| [1]ऋम्फन्-न्ती-ती, | ऋम्फयन्-न्ती, | ऋम्पिफिषन्-न्ती-ती ; |
| ऋम्फिष्यन्-न्ती-ती, | ऋम्फयिष्यन्-न्ती-ती, | ऋम्पिफिषिष्यन्-न्ती-ती ; |
| — | [2]ऋम्फयमाणः, | ऋम्फयिष्यमाणः; |
| [3]ऋप्-ऋब्-ऋम्फौ-ऋम्फः ; | — | — |
| ऋफितः-तम्, | ऋम्फितः-तम्, | ऋम्पिफिषितः-तवान् ; |
| ऋम्फः, ऋम्फः, | ऋम्पिफिषुः, | ऋम्पिफयिषुः ; |
| ऋम्फितव्यम्, | ऋम्फयितव्यम्, | ऋम्पिफिषितव्यम् ; |
| ऋम्फणीयम्, | ऋम्फणीयम्, | ऋम्पिफिषणीयम् ; |
| ईषदृम्फः, दुरृम्फः, स्वृम्फः ; | — | — |
| ऋफयमाणः, | ऋम्फयमाणः, | ऋम्पिफिष्यमाणः ; |
| [A]ऋम्फः, | ऋम्फः, | ऋम्पिफिषः ; |
| ऋम्फितुम्, | ऋम्फयितुम्, | ऋम्पिफिषितुम् ; |
| ऋम्फा, ऋम्फणा, | ऋम्पिफिषा, | ऋम्पिफयिषा ; |
| ऋम्फणम्, | ऋम्फणम्, | ऋम्पिफिषणम् ; |
| [4]ऋफित्वा, ऋम्फित्वा, | ऋम्फयित्वा, | ऋम्पिफिषित्वा ; |

1. 'अनिदिताम्—' (6-4-24) इति नलोपे, 'शे तृम्फादीनामिति वाच्यम्' (वा. 7-1-59) इति नुम्।
2. 'ऋवर्णान्नस्य णत्वं वाच्यम्' (वा. 8-4-2) इति णत्वम्।
3. 'अनिदितां हल उपधायाः—' (6-4-24) इत्युपधानकारलोपः। एवं निष्ठायामपि।
4. 'नोपधात् थफान्ताद्वा' (1-2-23) इति कित्त्वविकल्पः। कित्त्वपक्षे नलोपः।

A. "युद्धेषूद्दृपिता द्विषेष्वदृफिता यस्मिन्नृफन्तो सुरान्
ऋम्फार्द्दा घृतना स्थिता सुगुम्फितैर्माल्यैः कचान् गुम्फती॥" धा. का. 2-74.

| | | |
|---|---|---|
| समृफ्य, | समृम्फय, | समृम्पिफिम्प्य ; |
| ऋम्फम् २, ऋफित्वा २, ऋम्फित्वा २, | ऋम्फम् २, ऋम्फयित्वा २, | ऋम्पिफिषम् २ ; ऋम्पिफिषित्वा २. |

(128) "ऋफ हिंसायाम्" (VI-तुदादिः-1815. सक. सेट्. पर.)

| | | |
|---|---|---|
| अर्फकः-र्फिका, | अर्फकः-र्फिका, | अर्पिर्फिषकः-षिका ; |
| अर्फिता-त्री, | अर्फयिता-त्री, | अर्पिर्फिषिता-त्री ; |
| [1]ऋफन्-[A]न्ती-ती, | अर्फयन्-न्ती, | अर्पिर्फिषन्-न्ती ; |
| अर्फिष्यन्-न्ती-ती, | अर्फयिष्यन्-न्ती-ती, | अर्पिर्फिषिष्यन्-न्ती-ती ; |
| — | अर्फयमाणः, | अर्फयिष्यमाणः ; |
| ऋप्-ऋफौ-ऋफः ; | — | — |
| ऋफितम्-तः, | अर्फितम्-तः, | अर्पिर्फिषितः-तवान् ; |
| ऋफः, अर्फः, | अर्पिर्फिषुः, | अर्पिर्फयिषुः ; |
| अर्फितव्यम्, | अर्फयितव्यम्, | अर्पिर्फिषितव्यम् ; |
| अर्फणीयम्, | अर्फणीयम्, | अर्पिर्फिषणीयम् ; |
| [2]ऋफ्यम्, | अर्फ्यम्, | अर्पिर्फिष्यम् ; |
| ईषदर्फः, दुरर्फः, स्वर्फः ; | — | — |
| ऋफ्यमाणः, | अर्फ्यमाणः, | अर्पिर्फिष्यमाणः ; |
| अर्फः, | अर्फः, | अर्पिर्फिषः ; |
| अर्फितुम्, | अर्फयितुम्, | अर्पिर्फिषितुम् ; |
| ऋप्तिः, | अर्फणा, | अर्पिर्फिषा, अर्पिर्फयिषा ; |
| अर्फणम्, | अर्फणम्, | अर्पिर्फिषणम् ; |
| अर्फित्वा, | अर्फयित्वा, | अर्पिर्फिषित्वा ; |
| समृफ्य, | समर्फ्य, | समर्पिर्फिष्य ; |

---

1. 'सार्वधातुकमपित्' (1-2-4) इति शप्रत्ययस्य ङिद्भावातिदेशात्, 'क्ङिति च' (1-1-5) इति गुणनिषेधः। 'आच्छीनद्योः—' (7-1-80) इति नुम् विकल्पेन।
2. 'ऋदुपधाच्चाक्लृपि—' (3-1-110) इति क्यप्।

A. 'युद्धेऽदृप्यिता द्विट्स्वदर्फिता यस्मिन् ऋफन्ती सुरान्
ऋम्फार्हा पृतना स्थिता सुगुफितैर्माल्यैः कचान् गुम्फती ॥' धा. का. 2-74.

| | | |
|---|---|---|
| अर्फम् २, | अर्फम् २, | अर्पिफिषम् २ ; |
| अर्फित्वा २, | अर्फयित्वा २, | अर्पिफिषित्वा २. |

## (129) "ऋषी गतौ" (VI-तुदादिः. सक. सेट्. पर.)

| | | |
|---|---|---|
| अर्षकः-र्षिका, | अर्षकः र्षिका, | अर्षिषिषकः-षिका ; |
| अर्षिता-त्री, | अर्षयिता-त्री, | अर्षिषिषिता-त्री ; |
| [1]ऋषन्-[A]न्ती-ती, | अर्षयन्-न्ती, | अर्षिषिषन्-न्ती ; |
| अर्षिष्यन्-न्ती-ती, | अर्षयिष्यन् न्ती-ती, | अर्षिषिषिष्यन्-न्ती-ती ; |
| — | अर्षयमाणः, | अर्षयिष्यमाणः ; |
| [2]ऋट्-ऋड्-ऋषौ-ऋषः ; | — | — |
| [3]ऋष्टम्-ष्टः-ष्टवान्, | अर्षितः-तम्, | अर्षिषिषितः-तवान् ; |
| ऋषः, अर्षः, | अर्षिषिषुः, | अर्षिषयिषुः ; |
| अर्षितव्यम्, | अर्षयितव्यम्, | अर्षिषिषितव्यम् ; |
| अर्षणीयम्, | अर्षणीयम्, | अर्षिषिषणीयम् ; |
| [4]ऋष्यम्, | अर्ष्यम्, | अर्षिषिष्यम् ; |
| ईषदर्षः, दुरर्षः, स्वर्षः ; | — | — |
| ऋष्यमाणः, | अर्ष्यमाणः, | अर्षिषिष्यमाणः ; |
| अर्षः, | अर्षः, | अर्षिषिषः ; |
| अर्षितुम्, | अर्षयितुम्, | अर्षिषिषितुम् ; |
| ऋष्टिः, | अर्षणा, | अर्षिषिषा, अर्षिषयिषा ; |
| अर्षणम्, | अर्षणम्, | अर्षिषिषणम् ; |
| अर्षित्वा, | अर्षयित्वा, | अर्षिषिषित्वा ; |
| समृष्य, | समर्ष्य, | समर्षिषिष्य ; |

1. 'तुदादिभ्यः शः' (3-1-77) इति शः प्रत्ययः । तस्य ङिद्वद्भावात् 'क्ङिति च' (1-1-5) इति गुणनिषेधः ।
2. 'झलां जशोऽन्ते' (8-2-39) इति षकारस्य जश्त्वम् । चर्त्वविकल्पः ।
3. 'श्वीदितो निष्ठायाम्' (7-2-14) इतीण्णिषेधः ।
4. 'ऋदुपधात्—' (3-1-110) इति क्यप् ।

A. 'ऋषन् अजुषत क्रमात् नगरगर्भमुद्वेजयन्
अलमनसः खलानवगलज्जमानात्मनम् ॥' धा. का. 2-72.

अर्पम् २, अर्पयित्वा २, } अर्पम् २, अर्पयित्वा २, } अर्पिपिपम् २ ; अर्पिपिपित्वा २. }

[1]ऋषिः, [2]ऋषभः.

(130) " ऋ गतौ " (IX-क्र्यादिः-1497. सक. सेट्. पर. प्वादिः।)

'तत्रेयर्त्यृच्छतीत्यर्तेः, श्नि गतौ स्याद् ऋणाति तु ॥'

(श्लो-30) इति देवः।

आरकः-रिका, आरकः-रिका, [3]अरिरीषकः-अरिरिषकः-[4]ईर्षिषकः-षिका ;
[5]अरीता-अरिता-त्री, आरयिता-त्री, अरिरीषिता-अरिरिषिता-ईर्षिषिता-त्री ;
[6]ऋणन्-ती, आरयन्-न्ती, अरिरीषन्-अरिरिषन्-ईर्षिषन्-न्ती ;
अरीष्यन्-अरिष्यन्-न्ती-ती, आरयिष्यन्-न्ती-ती, अरिरीषिष्यन्-अरिरिषिष्यन्- ईर्षिषिष्यन्-न्ती-ती ; }
— आरयमाणः, आरयिष्यमाणः ; — —
[7]ईः-इरौ-इरः ; — — — —
[8]समीर्णम्-र्णः-र्णवान्, आरितम्-तः, अरिरीषितः-अरिरिषितः-ईर्षिषितः-[तवान् ;

---

1. औणादिके (द. उ. 1-48) इन् प्रत्यये किद्वद्भावान्न गुणः।
2. औणादिके (द. उ. 7-10) अभच् प्रत्यये रूपम्। कित्वान्न गुणः। गोपतिः, युवा वार्षभः।
3. अस्य धातोः सनि, 'इट् सनि वा' (7-2-41) इतीड्विकल्पः। इट्पक्षे द्वितीयस्यैकाचो द्विर्वचने 'वृतो वा' (7-2-38) इति दीर्घविकल्पः। एवं सर्वत्र सन्नन्ते इट्पक्षे बोध्यम्।
4. इडभावपक्षे 'इको झल्' (1-2-9) इति सनः कित्त्वाद् गुणाभावेन, 'ऋत इद्धातोः' (7-1-100) इति इत्वे रपरत्वे, 'हलि च' (8-2-77) इति दीर्घे च रूपम्। एवं सन्नन्ते इडभावपक्षे सर्वत्र ज्ञेयम्।
5. 'वृतो वा' (7-2-38) इतीटो दीर्घविकल्पः।
6. 'क्र्यादिभ्यः श्ना' (3-1-81) इति श्ना विकरणप्रत्ययः। 'प्वादीनां ह्रस्वः' (7-3-80) इति ह्रस्वे, 'श्नाभ्यस्तयोरातः' (6-4-112) इति आकारलोपे नुमि च रूपम्।
7. धातोः इत्वे रपरत्वे, 'र्वोरुपधायाः—' (8-2-76) इति दीर्घे च रूपम्।
8. सनि वैकल्पिकेट्त्वात् 'यस्य विभाषा' (7-2-15) इति, 'श्र्युकः किति' (7-2-11) इति वा इण्निषेधः। 'ल्वादिभ्यः' (8-2-44) इति निष्ठानत्वे णत्वम्।

अरः, आरः, अरिरीषुः-अरिरिषुः-ईर्षिषुः, आरिरयिषुः ;
अरीतव्यम्-अरितव्यम्, आरयितव्यम्, अरिरीषितव्यम्-अरिरिषितव्यम्-ईर्षिषितव्यम् ;
अरणीयम्, आरणीयम्, अरिरीषणीयम्-अरिरिषणीयम्-ईर्षिषणीयम् ;
[1]आर्यम्, आर्यम्, अरिरीष्यम्-अरिरिष्यम्-ईर्षिष्यम् ;
ईषदरः-दुररः-स्वरः ; — — —
[2]ईर्यमाणः, आर्यमाणः, अरिरीष्यमाणः-अरिरिष्यमाणः-ईर्षिष्यमाणः ;
अरः, आरः, अरिरीषः-अरिरिषः-ईर्षिषः ;
अरीतुम्-अरितुम्, आरयितुम्, अरिरीषितुम्-अरिरिषितुम्-ईर्षिषितुम् ;
[3]ईर्णिः, आरणा, अरिरीषा-अरिरिषा-ईर्षिषा, आरिरयिषा ;
अरणम्, आरणम्, अरिरीषणम्-अरिरिषणम्-ईर्षिषणम् ;
ईर्त्वा, आरयित्वा, अरिरीषित्वा-अरिरिषित्वा-ईर्षिषित्वा ;
समीर्य, समार्य, समरीरिष्य-समरिरिष्य-समीर्षिष्य ;
आरम् २, ईर्त्वा २, } आरम् २, आरयित्वा २, } अरिरीषम् २, अरिरिषम् २, अरिरीषित्वा २, अरिरिषित्वा २, ईर्षिषम् २ ; ईर्षिषित्वा २. }

(131) "एजृ दीप्तौ" (I-भ्वादिः-179. अक. सेट्. आत्म.)

'दीप्तौ शप्येजते तत्र, भवेदेजति कम्पने ॥' (श्लो. 58) इति देवः ।

| | | |
|---|---|---|
| एजकः-जिका, | एजकः-जिका, | एजिजिषकः-षिका ; |
| एजिता-त्री, | एजयिता-त्री, | एजिजिषिता-त्री ; |
| — | एजयन्-न्ती, | एजयिष्यन्-न्ती-ती ; |
| एजमानः, | एजयमानः, | एजिजिषमाणः ; |

1. 'ऋहलोर्ण्यत्' (3-1-124) इति ण्यत् ।
2. यकि धातोरित्वे रपरत्वे, 'हलि च' (8-2-77) इति दीर्घः । एवं क्त्वायां, ल्यपि च ज्ञेयम् ।
3. 'ऋल्वादिभ्यः क्तिन् निष्ठावद्वाच्यः' (वा. 8-2-44) इति क्तिनस्तकारस्य नत्वे, णत्वे च रूपम् ।

| | | |
|---|---|---|
| एजिष्यमाणः, | एजयिष्यमाणः, | एजिजिषिष्यमाणः ; |
| [1]एक्-एग्-एजौ-एजः ; | — | — |
| [4]एजितः-तम्, | एजितः-तम्, | एजिजिषितः-तवान् ; |
| एज·, [2]उदेजयः[B], [3]जनमेजयः, अङ्गमेजयः, सत्त्वमेजयः[C], एजः, एजिजिषुः, एजिजयिषुः ; | | |
| एजितव्यम्, | एजयितव्यम्, | एजिजिषितव्यम् ; |
| एजनीयम्, | एजनीयम्, | एजिजिषणीयम् ; |
| [4]एज्यम्, | एज्यम्, | एजिजिष्यम् ; |
| ईषदेजः, दुरेजः, स्वेजः ; — | | — |
| एज्यमानः, | एज्यमानः, | एजिजिष्यमाणः ; |
| एजः, | एजः, | एजिजिषः ; |
| एजितुम्, | एजयितुम्, | एजिजिषितुम् ; |
| [5]एजा, | एजना, | एजिजिषा, एजिजयिषा ; |
| एजनम्, [6]प्रेजनम्, | एजनम्, | एजिजिषणम् ; |
| एजित्वा, | एजयित्वा, | एजिजिषित्वा ; |
| समेज्य, | प्रेज्य, | समेजिजिष्य ; |

1. 'चोः कुः' (8-2-30) इति कुत्वम् ।
2. 'अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च' (3-1-138) इति शः प्रत्ययः । 'कर्तरि शप्' (3-1-68) इति शपि गुणायादेशौ । 'अनुपसर्गात्—' (3-1-138) इत्यत्र अनुपसर्गग्रहणं अन्यविशेषणम्, अत्रापि—उपसर्गान्तरनिवृत्त्यर्थं च । तेन 'समुदेज' इत्यत्र अचि णिलोप एव । न तु शप्रत्ययः—इति मा. धा. वृत्तौ ।
3. 'एजेः खश्' (3-2-28) इति खश् । शित्वात् शबादिः । 'अरुर्द्विषद्—' (6-3-67) इति उपपदस्य मुम् ।
4. निष्ठायां सेट्त्वात् 'चजोः—' (7-3-52) इति कुत्वं न ।
5. 'गुरोश्च हलः' (3-3-103) इत्यकारः प्रत्ययः ।
6. 'एङि पररूपम्' (6-1-94) इति पररूपमेव । न वृद्धिः ।

A. "अमुष्मैर्मखितचित्तपखितत्रयीमतप्रस्तुचितैः शुभार्जकैः ।
समृञ्जितं कन्दममृक्तसत्फलान्यदद्भिरेकत्र यदेजितं जनैः ॥" धा. का. 1-24.

B. 'आर्चीत् द्विजातीन् परमार्थविन्दान् उदेजयान् भूतगणान् न्यषेधीत् ।' भ. का. 1-15.

C. 'सत्त्वमेजयसिंहाढ्यान् स्तनन्धयसमत्विषौ ।' भ. का. 6-94.

| | | |
|---|---|---|
| एजम् २, एजित्वा २, | एजम् २, एजयित्वा २, | एजिजिषम् २ ; एजिजिषित्वा २. |

(132) "एजृ कम्पने" (I-भ्वादिः-234. सक. सेट्. पर.)

'दीप्तौ शभ्येजते तत्र, भवेदेजति कम्पने ।' (श्लो-68) इति देवः ।

एजन्-न्ती, एजिष्यन्-न्ती-ती, इति शतरि रूपमिति विशेषः । अन्यानि सर्वाणि रूपाणि दीप्त्यर्थकभ्वादिकेजतिवत् (131) बोध्यानि ।

(133) "एठ विबाधायाम्" (I-भ्वादिः-267. सक. सेट्. आत्म.) (अ)

| | | |
|---|---|---|
| एठकः-ठिका, | एठकः-ठिका, | एटिठिषकः-षिका ; |
| एठिता-त्री, | एठयिता-त्री, | एटिठिषिता-त्री ; |
| — | एठयन्-न्ती, | एठयिष्यन्-न्ती-ती ; |
| एठमानः, | एठयमानः, | एटिठिषमाणः ; |
| एठिष्यमाणः, | एठयिष्यमाणः, | एटिठिषिष्यमाणः ; |
| एट्-एड्-एठौ-एठः ; | — | — |
| [A]एठितम्-तः, | एठितः-तम्, | एटिठिषितः-तवान् ; |
| एठः, एठः, | एटिठिषुः, | एटिठयिषुः ; |
| एठितव्यम्, | एठयितव्यम्, | एटिठिषितव्यम् ; |
| एठनीयम्, | एठनीयम्, | एटिठिषणीयम् ; |
| एठ्यम्, | एठ्यम्, | एटिठिष्यम् ; |
| ईषदेठः, दुरेठः, स्वेठः ; | — | — |
| एठ्यमानः, | एठ्यमानः, | एटिठिष्यमाणः ; |
| एठः, | एठः, | एटिठिषः ; |
| एठितुम्, | एठयितुम्, | एटिठिषितुम् ; |
| एठा, | एठना, | एटिठिषा, एटिठयिषा ; |
| एठनम्, | एठनम्, | एटिठिषणम् ; |

(अ) 'विपूर्वोऽयमिति स्वामिकाश्यपौ । मैत्रेयादयस्तु केवलमेवोदाजह्रुः ।' इति माधवधातुवृत्तिः । अत्र स्वामिपदेन, न क्षीरस्वामी ग्राह्यः, अपि तु अन्यः केशवस्वामी शिवस्वामी वा इति प्रतिभाति ।

A. 'भ्रमन् कुमार्गेषु शुभाध्वनैव वन् प्रमन् मृशोत्कण्ठितयोपिके हरौ ।
स पापमुग्भिर्बुधहेडभिरुन्मदैरनेठितां क्ष्मां पुनरप्यहिण्डत ॥' धा. का. 1-35.

| | | |
|---|---|---|
| एठित्वा, | एठयित्वा, | एटिठिपित्वा ; |
| समेठ्य, | समेठ्य, | समेटिठिप्य ; |
| एठम् २, एठित्वा २, | एठम् २, एठयित्वा २, | एटिठिपम् ; एटिठिपित्वा २. |

(134) " एध वृद्धौ " (I-भ्वादिः-2. अक. सेट्. आत्म.)

| | | |
|---|---|---|
| एधकः [1]प्रैधकः-धिका, | एधकः-धिका, | एदिधिषकः-षिका ; |
| एधिता-त्री, | एधयिता-त्री, | एदिधिषिता-त्री ; |
| एधयन्-न्ती, | ([2]स्वं पुत्रम्) एधयन्, | एधयिष्यन्-न्ती-ती ; |
| एधमानः, | [3]एधयमानः, | एदिधिषमाणः ; |
| एधिष्यमाणः, | एधयिष्यमाणः, | एदिधिषिष्यमाणः ; |
| एत्-एध्-एधौ-एधः ; | — | — |
| [A]एधितम्-तः,[B] | एधितम्-तः, | एदिधिषितम्-तः-तवान् ; |
| एधः, एधः, | एदिधिषुः, | एदिधयिषुः ; |
| एधितव्यम्, | एधयितव्यम्, | एदिधिषितव्यम् ; |
| एधनीयम्, | एधनीयम्, | एदिधिषणीयम् ; |
| एध्यम्, | एध्यम्, | एदिधिष्यम् ; |
| ईषदेधः, दुरेधः, स्वेधः ; | — | — |
| एध्यमानः, | एध्यमानः, | एदिधिष्यमाणः ; |
| एधः, | एधः, | एदिधिषः ; |
| एधितुम्, | एधयितुम्, | एदिधिषितुम् ; |
| एधा, | एधना, | एदिधिषा, एदिधयिषा ; |
| एधनम्, | एधनम्, | एदिधिषणम् ; |

1. 'एत्येधत्यूठ्सु' (6-1-89) इति वृद्धिः, पररूपापवादः ।
2. 'विभाषोपपदेन प्रतीयमाने' (1-3-77) इत्यमुमपि बाधित्वा, परत्वात् 'अणौ—' (1-3-88) इति नित्यं परस्मैपदमेव ।
3. अण्यन्तावस्थायां चित्तवत्कर्तृकत्वे ण्यन्ते, 'अणावकर्मकात् चित्तवत्कर्तृकात्' (1-3-88) इति परस्मैपदमेव । 'एधयन्-न्ती' इत्येव ।

A. 'स गान्दिनीभूः अथ गोकुलैर्धितं स्पर्धाद्धुधीगाधितकार्यबाधिनम् ।
पश्यन् हरिं नाधितलोकनायकं देधे मुदास्कन्दितमन्तरिन्द्रियम् ॥' धा. का. 1-2.

B. 'अग्निः प्रमादेन ददाह लङ्कां वध्यस्य देहे स्वयमेधितश्चेत् ।' भ. का. 12. 24.

| | | |
|---|---|---|
| एधित्वा, | एधयित्वा, | एदिधिषित्वा ; |
| समेध्य, | समेध्य, | समेदिधिष्य ; |
| एधम् २, एधित्वा २, | एधम् २, एधयित्वा २, | एदिधिषम् २, एदिधिषित्वा २. |

(135) " एधृ प्रयत्ने गतौ च " (I-भ्वादिः-618.सक. सेट्. आत्म.)

दीप्त्यर्थकमोधादिकेजतिवत् (131) सर्वाणि रूपाणि ज्ञेयानि । किन्तु एद् इति रूपम् । 'झलां जशोऽन्ते ' (8-2-39) इति जश्त्वम् ।

(136) " ओखृ शोषणालमर्थयोः " (I-भ्वादिः-121.सक. सेट्. पर.)

| | | |
|---|---|---|
| ओखकः-खिका, | ओखकः-खिका, | [1]ओचिखिषकः-षिका ; |
| ओखिता-त्री, | ओखयिता-त्री, | ओचिखिषिता-त्री ; |
| ओखन्-न्ती, | ओखयन्-न्ती, | ओचिखिषन्-न्ती ; |
| ओखिष्यन्-न्ती-ती, | ओखयिष्यन्-न्ती-ती, | ओचिखिषिष्यन्-न्ती-ती, |
| — | ओखयमानः, | ओखयिष्यमाणः ; |
| ओक्-ओग्-ओखौ-ओखः ; | — — | — |
| [A]ओखितः-तम्, | ओखितम्-तः, | ओचिखिषितः-तवान् ; |
| ओखः, ओखः, | ओचिखिषुः, | ओचिखयिषुः ; |
| ओखितव्यम् , | ओखयितव्यम् , | ओचिखिषितव्यम् ; |
| ओखनीयम् , | ओखनीयम् , | ओचिखिषणीयम् ; |
| ओख्यम् , | ओख्यम् , | ओचिखिष्यम् ; |
| ईषदोखः, दुरोखः, स्वोखः ; | — | — |
| ओख्यमानः, | ओख्यमानः, | ओचिखिष्यमाणः ; |
| ओखः, | ओखः, | ओचिखिषः ; |
| ओखितुम् , | ओखयितुम् , | ओचिखिषितुम् ; |
| ओखा, | ओखना, | ओचिखिषा, ओचिखयिषा ; |
| ओखनम् , | ओखनम् , | ओचिखिषणम् ; |

---

1. ' कुहोश्चुः ' (7-4-62) इति अभ्यासे चुत्वम् ।

A. " अफक्कतातकयगुणेन सङ्कुता खलस्वतुक्कापरुषे पुरेऽमुना ।
फेनैः कखन्तीमिव तां कलिन्दजां सन्तीर्य वृन्दावनमैक्षणोखितम् ॥" धा.का. 1-17.

| | | |
|---|---|---|
| ओखित्वा, | ओखयित्वा, | ओचिखिषित्वा ; |
| समोख्य, | समोख्य, | समोचिखिष्य ; |
| ओखम् २, ओखित्वा २, | ओखम् २, ओखयित्वा २, | ओचिखिषम् २ ; ओचिखिषित्वा २. |

(137) "ओणृ अपनयने" (I-भ्वादिः-454. सक. सेट्. पर.)

ओणकः-णिका, ओणकः-णिका, ओणिणिषकः-षिका, इत्यादिरूपाणि सर्वाणि 'ओखृ' (136) धातुवद्बोध्यानि। 'अन्येभ्योऽपि—' (3-2-75) इति वनिपि 'विड्वनोः—' (6-4-41) इति आत्वे, अवादेशे अवावा इति रूपम्। स्त्रियामपि अवावा इत्येव; 'वनो न हशः—' (वा. 4-1-7) इति ङीब्रत्वयोर्निषेधात्। 'वनो न हशः—' (वा. 4-1-7) इत्यस्य निषेधस्य प्रायिकत्वात् 'वनो र च' (4-1-7) इति ङीब्रत्वयोः अवावरी इत्यपि रूपम्—इति न्यासकारादयः।

(138) "ओलडि उत्क्षेपणे" (X-चुरादिः-1542. सक. सेट्. उभ.)

| | |
|---|---|
| [1]ओलण्डकः-ण्डिका, | ओलिलण्डयिषकः-षिका ; |
| ओलण्डयिता-त्री, | ओलिलण्डयिषिता-त्री ; |
| ओलण्डयन्-न्ती, | ओलिलण्डयिषन्-न्ती ; |
| ओलण्डयिष्यन्-न्ती-ती, | ओलिलण्डयिषिष्यन्-न्ती-ती ; |
| ओलण्डयमानः, | ओलिलण्डयिषमाणः ; |
| ओलण्डयिष्यमाणः, | ओलिलण्डयिषिष्यमाणः ; |
| ओलण्डः, | ओलिलण्डयिषुः ; |
| [A]ओलण्डितः-[B]तम्, | ओलिलण्डयिषितः-तवान् ; |
| ओलण्डयितव्यम्, | ओलिलण्डयिषितव्यम् ; |
| ओलण्डनीयम्, | ओलिलण्डयिषणीयम् ; |

---

1. 'ओकारः धात्ववयवः' इति पक्षे—इमानि रूपाणि। 'ओकार इत्' इति पक्षे तु लण्डकः इत्यादिरूपाणि वक्ष्यन्ते।

A. 'ओलण्डितादिरपि जालितदिव्यधामा निष्पीडितारिरनुनाटितमर्त्यभावः।' धा. का. 3-14.

B. 'ओलण्डितमिवापरथन् उग्रं धमरताण्डवम्।' यादवाभ्युदये 16-61.

| | |
|---|---|
| ओलण्ड्यम्, | ओलिलण्डयिष्यम् ; |
| ईषदोलण्डः, दुरोलण्डः, स्वोलण्डः ; | — |
| ओलण्ड्यमानः, | ओलिलण्डयिष्यमाणः ; |
| ओलण्डः, | ओलिलण्डयिषः ; |
| ओलण्डयितुम्, | ओलिलण्डयिषितुम् ; |
| ओलण्डना, | ओलिलण्डयिषा ; |
| ओलण्डनम्, | ओलिलण्डयिषणम् ; |
| ओलण्डयित्वा, | ओलिलण्डयिषित्वा ; |
| समोलण्ड्य, | समोलिलण्डयिष्य ; |
| ओलण्डम् २, ओलण्डयित्वा २, } | ओलिलण्डयिषम् २ ; ओलिलण्डयिषित्वा २. } |

(139) " कक लौल्ये " (I-भ्वादिः-90. अक. सेट्. आत्म.)

लौल्यम्=गर्वः, चापल्यं वा ।

| | | | |
|---|---|---|---|
| काककः-किका, | काककः-किका, | [1]चिककिषकः-षिका, | [2]चाककककः-किका ; |
| ककिता-त्री, | काकयिता-त्री, | चिककिषिता-त्री, | चाककिता-त्री ; |
| — | काकयन्-न्ती, | काकयिष्यन्-न्ती-ती ; | — |
| ककमानः, | काकयमानः, | चिककिषमाणः, | [3]चाकक्यमानः ; |
| [4]प्रनिककिष्यमाणः, | काकयिष्यमाणः, | चिककिषिष्यमाणः, | चाककिष्यमाणः ; |
| ककू-कग्-ककौ-ककः ; | | — | — |
| ककितम्-तः, | काकितः-तम्, | चिककिषितः, | चाककितः-तवान् ; |
| ककः, काकः, | चिककिषुः, | चिकाकयिषुः, | [5]चाककः ; |
| ककितव्यम्, | काकयितव्यम्, | चिककिषितव्यम्, | चाककितव्यम् ; |
| ककनीयम्, | काकनीयम्, | चिककिषणीयम्, | चाककनीयम् ; |

---

1. 'सन्यङोः' (6-1-9) इति द्वित्वे 'सन्यतः' (7-4-79) इति इत्वम्। कुत्वम्।
2. 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' (3-1-22) इति यङ्। 'सन्यङोः' (6-1-9) इति द्वित्वम्। 'दीर्घोऽकितः' (7-4-83) इति अभ्यासस्य दीर्घः।
3. यङन्तात् शानचि तस्य सार्वधातुकत्वात् 'अतो लोपः' (6-4-48) इति लोपस्याभावे यलोपाभावे न रूपम्।
4. 'शेषे विभाषाऽकखादावषान्त उपदेशे' (8-4-18) इति णत्वनिषेधः।
5. 'नन्दिग्रहिपचादिभ्यः—' (3-1-134) इति यङन्तात् पचाद्यच्।

| | | | |
|---|---|---|---|
| काक्यम्, | काक्यम्, | चिकाकिष्यम्, | चाकक्यम्; |
| ईषत्कक:, [1]दुष्कक:, सुकक:; | | — | — |
| कक्यमान:, | काक्यमान:, | चिककिष्यमाण:, | चाकक्यमान:; |
| [2]काक:[A], | काक:, | चिककिष:, | चाकक:; |
| ककितुम्, | काकयितुम्, | चिककिषितुम्, | चाककितुम्; |
| ककि:, काकना, चिककिषा, | | चिकाकयिषा, | चाकका; |
| ककनम्, | काकनम्, | चिककिषणम्, | चाकककनम्; |
| ककित्वा, | काकयित्वा, | चिककिषित्वा, | चाककित्वा; |
| प्रकक्य, | प्रकाक्य, | प्रचिककिष्य, | प्रचाकक्य; |
| काकम् २, ककित्वा २, | काकम् २, काकयित्वा २, | चिककिषम् २, चिककिषित्वा २, | चाककम् २; चाककित्वा २. |

(140) " ककि गतौ " (I-भ्वादि:-94. सक. सेट्. आत्म.)

कङ्कक:-ङ्किका, कङ्कक:-ङ्किका, चिकङ्किषक:-षिका, चाकङ्कक:-ङ्किका;

कङ्किता-त्री, कङ्कयिता-त्री, चिकङ्किषिता-त्री, चाकङ्किता-त्री;

— कङ्कयन्-न्ती, कङ्कयिष्यन्-न्ती-ती; —

कङ्कमान:, कङ्कयमान:, चिकङ्किषमाण:, चाकङ्कयमान:;

कङ्किष्यमाण:, कङ्कयिष्यमाण:, चिकङ्किषिष्यमाण:, चाकङ्किष्यमाण:;

[3]कन्-कङ्कौ-कङ्क:; — — —

कङ्कितम्-त:, कङ्कितम्-त:, चिकङ्किषित:, चाकङ्कित:-तवान्;

[B]कङ्क: (गृध्र:), कङ्क:, चिकङ्किषु:, चिकङ्कयिषु:, चाकङ्क:;

कङ्कितव्यम्, कङ्कयितव्यम्, चिकङ्किषितव्यम्, चाकङ्कितव्यम्;

[4]प्रनिकङ्कनीयम्, कङ्कनीयम्, चिकङ्किषणीयम्, चाकङ्कनीयम्;

---

1. 'इदुदुपधस्य—' (8-3-41) इति षत्वम्।
2. बाहुलकात् कर्तरि घञ्।
3. 'संयोगान्तस्य लोप:' (8-2-23) इति ककारलोप:।
4. 'शेषे विभाषा—' (8-4-18) इति णत्वनिषेध:।

A. 'फलाङ्कितान् वङ्कितवल्लिमङ्कितान् वनप्रदेशात् उरुकाककोकिलान्। शुकाञ्चितान् मुग्धचकोरकूजितानुड्डीनकङ्कानयमत्यवङ्कत॥' धा. का. 1-13.

B. 'फलाङ्कितान् वङ्कितवल्लिमङ्कितान् वनप्रदेशानुरुकाककोकिलान्। शुकाञ्चितान् मुग्धचकोरकूजितानुड्डीनकङ्कानयमत्यवङ्कत॥' धा. का. 1-13.

कङ्क्यम्, कङ्क्यम्, चिकङ्क्यिम्, चाकङ्क्यम्;

ईषत्कङ्कः, दुष्कङ्कः, सुकङ्कः; — —

कङ्क्यमानः, कङ्क्यमानः, चिकङ्क्यिमाणः, चाकङ्क्यमानः;

कङ्कः, कङ्कः, चिकङ्किषः, चाकङ्कः;

कङ्कितुम्, कङ्कयितुम्, चिकङ्किषितुम्, चाकङ्कितुम्;

कङ्का, कङ्कना, चिकङ्किषा, चिकङ्कयिषा, चाकङ्का;

[1]प्रकङ्कनम्, कङ्कनम्, चिकङ्किषणम्, चाकङ्कनम्;

कङ्कित्वा, कङ्कयित्वा, चिकङ्किषित्वा, चाकङ्कित्वा;

सङ्कङ्क्य, प्रकङ्क्य, प्रचिकङ्किष्य, प्रचाकङ्क्य;

कङ्कम् २, कङ्कित्वा २, } कङ्कम् २, कङ्कयित्वा २, } चिकङ्किषम् २, चिकङ्किषित्वा २, } चाकङ्कम् २; चाकङ्कित्वा २.}

(141) "कख हसने" (I-भ्वादिः-120. सक. सेट्. पर.)

काखकः-खिका, काखकः-खिका, चिकखिषकः-षिका, चाकखकः-खिका;

कखिता-त्री, काखयिता-त्री, चिकखिषिता-त्री, चाकखिता-त्री;

कखन्-[A]न्ती, काखयन्-न्ती, चिकखिषन्-न्ती; —

कखिष्यन्-न्ती-ती, काखयिष्यन्-न्ती-ती, चिकखिषिष्यन्-न्ती-ती;

— काखयमानः, काखयिष्यमाणः, चाकखमानः, चाकखिष्यमाणः;

कक्-कखौ-कखः; — —

कखितं-तः, काखितः-तम्, चिकखिषितः, चाकखितः-तवान्;

कखः, काखः, चिकखिषुः, चिकाखयिषुः, चाकखः;

कखितव्यम्, काखयितव्यम्, चिकखिषितव्यम्, चाकखितव्यम्;

प्रनिकखनीयम्, काखनीयम्, चिकखिषणीयम्, चाकखनीयम्;

काख्यम्, काख्यम्, चिकखिष्यम्, चाकख्यम्;

ईषत्कखः, दुष्कखः, सुकखः; — —

कख्यमानः, काख्यमानः, चिकखिष्यमाणः, चाकख्यमानः;

---

1. 'इजादेस्सनुमः' (8-4-32) इति नियमात् णत्वं न।

A. 'अफल्गालकपनुनेन सहुना खलत्वमुहापरवे पुरेऽमुना।
कैनेः कखन्तीमिव तां कखिन्दयां सन्तीयें सुन्दरमंकोरनोऽखिलम् ॥'
धा. का. 1-17.

काखः, काखः, चिकखिषः, चाकखः ;
कखितुम्, काखयितुम्, चिकखिषितुम्, चाकखितुम् ;
कखितः, काखना, चिकखिषा, चिकाखयिषा, चाकखा ;
[1]प्रकखणम्, काखनम्, चिकखिषणम्, चाकखनम् ;
कखित्वा, काखयित्वा, चिकखिषित्वा, चाकखित्वा ;
प्रकख्य, प्रकाख्य, प्रचिकखिष्य, प्रचाकख्य ;
काखम् २, कखित्वा २, } काखम् २, काखयित्वा २, } चिकखिषम् २, चिकखिषित्वा २, } चाकखम् २ ; चाकखित्वा २. }

(142) "कखे हसने" (I-भ्वादिः-784. अक. सेट्. पर. घटादिः ।)

काखकः-खिका, चिकखिषकः-षिका, चाकखकः-खिका, इत्यादीनि रूपाणि क्रमेण शुद्धात्-सन्नन्तात् यङन्ताच्च, पूर्वोक्तकख (141) धातुवत् ज्ञेयानि । ण्यन्ते परं घटादिपाठात् 'घटादयो मितः' (गणसूत्रम्-भ्वादौ) इति मित्त्वे, 'मितां ह्रस्वः' (6-4-92) इति ह्रस्वे इमानि रूपाणि--

| | |
|---|---|
| कखकः-खिका, | कख्यमानः ; |
| कखयिता-त्री, | कखः ; |
| कखयन्-न्ती, | कखयितुम् ; |
| कखयिष्यन्-न्ती-ती, | कखना ; |
| कखयमानः, | कखनम् ; |
| कखयिष्यमाणः, | कखयित्वा ; |
| कखः, चिकखयिषुः, | [2]प्रकखय्य ; |
| कखयितव्यम्, | [3]कखम् २, } |
| कखनीयम्, | काखम् २ ; } |
| कख्यम्, | कखयित्वा २. } |
| ईषत्कखः-दुष्कखः-सुकखः, | इति विशेषः । |

---

1. 'कृत्यचः' (8-4-29) इति णत्वम् ।
2. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः ।
3. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति दीर्घविकल्पः ।

(143) "कगे नोच्यते" (I-भ्वादिः-791.-अक. सेट्. पर. घटादिः।)

अस्यायमर्थ इति विशिष्य नोच्यते-क्रियासामान्यार्थत्वात् इत्येके। अनेकार्थत्वात्-इत्यन्ये। शुद्धात्-सन्नन्तात्-यङन्ताच्च, धातोरस्य कखतिवत् (141) रूपाणि सर्वाण्यपि ज्ञेयानि। ण्यन्तात् तु 'कखे हसने' (142) इति घटादिधातुवत् ज्ञेयानि ॥

(144) "कच बन्धने" (I-भ्वादिः. 168. सक. सेट्. आत्म.)

दीप्तौ च-इति कविकल्पद्रुमे।

| | | | |
|---|---|---|---|
| काचकः-चिका, | काचकः-चिका, | चिकचिषकः-षिका, | चाकचकः-चिका; |
| कचिता-त्री, | काचयिता-त्री, | चिकचिषिता-त्री, | चाकचिता-त्री; |
| — | काचयन्-न्ती, | काचयिष्यन्-न्ती-ती; | — |
| कचमानः, | काचयमानः, | चिकचिषमाणः, | चाकच्यमानः; |
| कचिष्यमाणः, | काचयिष्यमाणः, | चिकचिषिष्यमाणः, | चाकचिष्यमाणः, |
| [1]कक्-कचौ-कचः; | — | — | — |
| कचितम्-तः, | काचितः-तम्, | चिकचिषितः, | चाकचितः-तवान्; |
| [2]कचः[A], काचः, चिकचिषुः, | | चिकाचयिषुः, | चाकचः; |
| कचितव्यम्, | काचयितव्यम्, | चिकचिषितव्यम्, | चाकचितव्यम्; |
| कचनीयम्, | काचनीयम्, | चिकचिषणीयम्, | चाकचनीयम्; |
| [3]काच्यम्, | काच्यम्, | चिकचिष्यम्, | चाकच्यम्; |
| ईषत्कचः, दुष्कचः, सुकचः; | | — | — |
| कच्यमानः, | काच्यमानः, | चिकचिष्यमाणः, | चाकच्यमानः; |
| [4]काचः, | काचः, | चिकचिषः, | चाकचः; |
| कचितुम्, | काचयितुम्, | चिकचिषितुम्, | चाकचितुम्; |

1. 'चोः कुः' (8-2-30) इति कुत्वम्।
2. कचते=बध्नाति यूनां मनांसीति कचः=स्त्रीणां केशपाशः।
3. निष्ठायां सेट्त्वात् 'चजोः कु—' (7-3-52) इति न कुत्वम्।
4. 'हलश्च' (3-3-121) इति संज्ञायां घञ्। 'काचः शिक्ये मणौ नेत्ररोगभेदे मृद्भेदे' इति मेदिनी॥

A. 'सुलोचना यत्र शचीसमप्रभा अराध्वुः स्वसितसौरभाः कचे। ...कम्बुकाः काञ्चनकाञ्चिभूषिता ...ना निर्मथनेन नर्मणा॥' धा. का. 1-23.

कचितः, काचना, चिकचिषा, चिकाचयिषा, चाकचा ;
कचनम्, काचनम्, चिकचिषणम्, चाकचनम् ;
कचित्वा, काचयित्वा, चिकचिषित्वा, चाकचित्वा ;
प्रकच्य, प्रकाच्य, प्रचिकचिष्य, प्रचाकच्य ;
काचम् २, } काचम् २, } चिकचिषम् २, } चाकचम् २ ; }
कचित्वा २, } काचयित्वा २, } चिकचिषित्वा २, } चाकचित्वा २. }

(145) "कचि दीप्तिबन्धनयोः" (I-भ्वादिः-169. सक. सेट्. आत्म.)

[1]कञ्चकः-ञ्चिका, कञ्चकः-ञ्चिका, चिकञ्चिषकः-षिका, [2]चाकञ्चकः-ञ्चिका ;
कञ्चिता-त्री, कञ्चयिता-त्री, चिकञ्चिषिता-त्री, चाकञ्चिता-त्री ;
— कञ्चयन्-न्ती, कञ्चयिष्यन्-न्ती-ती, —
प्रनिकञ्चमानः, कञ्चयमानः, चिकञ्चिषमाणः, चाकञ्चयमानः ;
कन्-कञ्चौ-कञ्चः ; — — —
कञ्चितम्-तः, कञ्चितम्-तः, चिकञ्चिषितः, चाकञ्चितः-तवान् ;
कञ्चः, कञ्चः, चिकञ्चिषुः, चिकञ्चयिषुः, चाकञ्चः ;
कञ्चितव्यम्, कञ्चयितव्यम्, चिकञ्चिषितव्यम्, चाकञ्चितव्यम् ;
कञ्चनीयम्, कञ्चनीयम्, चिकञ्चिषणीयम्, चाकञ्चनीयम् ;
[3]कञ्च्यम्, कञ्च्यम्, चिकञ्चिष्यम्, चाकञ्च्यम् ;
ईषत्कञ्चः, दुष्कञ्चः, सुकञ्चः ; — —
कञ्च्यमानः, कञ्च्यमानः, चिकञ्चिष्यमाणः, चाकञ्च्यमानः ;
कञ्चः, कञ्चः, चिकञ्चिषः, चाकञ्चः ;
कञ्चितुम्, कञ्चयितुम्, चिकञ्चिषितुम्, चाकञ्चितुम् ;
[4]कञ्चा, कञ्चना, चिकञ्चिषा, चिकञ्चयिषा, चाकञ्चा ;
कञ्चनम्, कञ्चनम्, चिकञ्चिषणम्, चाकञ्चनम् ;
कञ्चित्वा, कञ्चयित्वा, चिकञ्चिषित्वा, चाकञ्चित्वा ;

---

1. 'इदितो नुम् धातोः' (7-1-58) इति नुम् ।
2. 'अतो लोपः' (6-4-48) इति अकारलोपः । 'यस्य हलः' (6-4-49) इति यङो यकारस्य लोपः ।
3. निष्ठायां सेट्त्वात् 'चजोः—' (7-3-52) इति कुत्वं न ।
4. 'गुरोश्च हलः' (3-3-103) इति अः प्रत्ययः ।

प्रकञ्च्य, प्रकञ्च्य, प्रचिकञ्चिष्य, प्रचाकञ्च्य ;
कञ्चम् २, कञ्चिला २, } कञ्चम् २, कञ्चयित्वा २, } चिकञ्चिषम् २, चिकञ्चिषित्वा २, } चाकञ्चम् २ ; चाकञ्चित्वा २ ; }
कञ्चुकम्.[A]

(146) "कटि[कटी]गतौ" (I-भ्वादिः-320. सक. सेट्. पर.)

[1]कण्टकः-ण्टिका, कण्टकः-ण्टिका, चिकण्टिषकः-षिका, चाकण्टकः-ण्टिका ;
कण्टिता-त्री, कण्टयिता-त्री, चिकण्टिषिता-त्री, चाकण्टिता-त्री ;
कण्टन्-न्ती, कण्टयन्-न्ती, चिकण्टिषन्-न्ती ; —
कण्टिष्यन्-न्ती-ती, कण्टयिष्यन्-न्ती-ती, चिकण्टिषिष्यन्-न्ती-ती ;
— कण्टयमानः, कण्टयिष्यमाणः, चाकण्टयमानः, चाकण्टिष्यमाणः ;
कन् - कण्टौ - कण्टः ; — — —
कण्टः, कण्टः, चिकण्टिषुः, चिकण्टयिषुः, चाकण्टः ;
कण्टितम्-तः[B], कण्टितम्-तः, चिकण्टिषितः, चाकण्टितः-तवान् ;
कण्टितव्यम्, कण्टयितव्यम्, चिकण्टिषितव्यम्, चाकण्टितव्यम् ;
कण्टनीयम्, कण्टनीयम् चिकण्टिषणीयम्, चाकण्टनीयम् ;
कण्टयम्, कण्टयम्, चिकण्टिष्यम्, चाकण्टयम् ;
ईषत्कण्टः, दुष्कण्टः, सुकण्टः ; —
कण्टयमानः, कण्टयमानः, चिकण्टिष्यमाणः, चाकण्टयमाणः ;
कण्टः, कण्टः, चिकण्टिषः, चाकण्टः ;

---

1. 'इट किट कटी गतौ' इति धातुपाठे वर्तते। तत्र इदित् 'कटि' इति धातुरिति पक्षमवलम्ब्य इमानि रूपाणि विलिखितानि। अन्ये तु 'कटी' इति ईदितं धातुं प्रचक्षते। तन्मते काटकः, कट्टम्-कट्टः-कट्टवान्—इत्यादीनि रूपाणि भवन्ति। परे तु 'ई' इति धातुं प्रश्लिष्टं अङ्गीकृत्य, 'अदयति विततोर्ध्वरश्मि-' (शिशुपालवधे 4-20) रित्यादिप्रयोगनिर्वाहं कुर्वन्ति। तेषां मते 'ई' इति धात्वन्तरमप्यत्रेति ज्ञायते।

A. बाहुलकात् उकप्रत्ययः। 'कञ्चुको वारवाणे स्यान्निर्मोके कवचेऽपि च। वर्धापकगृहीताङ्गस्थितवस्त्रे च चोलके॥ कञ्चुकस्योपधिभेदे च—' इति मेदिनी।
'सुलोचना यत्र शचीसमप्रभा अशाश्वसुः श्वसितसौरभाः कचे।
सकञ्चुकाः काञ्चनकाञ्चिभूषिता भजाङ्गना निर्मंचनेन नर्मणा॥' धा. का. 1-23.

B. 'चेटैर्विटैश्चानुगतानचेटकैः एटत्पशूत्केटिरजः कटन् मलान्।
प्रकण्टितासोदयदंशुमण्डितैरकुण्डरत्नैर्मुडिनार्कदीधितीन्॥' धा. का. 1-42.

कण्टितुम्, कण्टयितुम्, चिकण्टिषितुम्, चाकण्टितुम्;
कण्टा, कण्टना, चिकण्टिषा, चिकण्टयिषा, चाकण्टा;
कण्टनम्, कण्टनम्, चिकण्टिषणम्, चाकण्टनम्;
कण्टित्वा, कण्टयित्वा, चिकण्टिषित्वा, चाकण्टित्वा;
सङ्कण्ट्य, प्रकण्ट्य, प्रचिकण्टिष्य, प्रचाकण्ट्य;
कण्टम् २, } कण्टम् २, } चिकण्टिषम् २, } चाकण्टम् २; }
कण्टित्वा २, } कण्टयित्वा २, } चिकण्टिषित्वा २, } चाकण्टित्वा २.}

(147) "कटे वर्षावरणयोः" (I-म्वादिः-294.सक. सेट्. पर.)

काटकः-टिका, काटकः-टिका, चिकटिषकः-षिका, चाकटकः-टिका, इति सर्वाण्यपि रूपाणि 'कख हसने' (141) इति धातोरिव ज्ञेयानि ।

(148) "कठ कृच्छ्रजीवने" (I-म्वादिः-333. अक. सेट्. पर.)*

'—अथ कण्ठते । शोके यो कण्ठयेत् कण्ठेत्, कठेत् स्यात् कृच्छ्रजीवने ॥' (श्लो-79) इति देवः ।

काठकः-ठिका, काठकः-ठिका, चिकठिषकः षिका, चाकठकः-ठिका;
कठिता-त्री, काठयिता-त्री, चिकठिषिता-त्री, चाकठिता-त्री;
कठन्-न्ती, काठयन्-न्ती, चिकठिषन्-न्ती;
कठिष्यन्-न्ती-ती, काठयिष्यन्-न्ती-ती, चिकठिषिष्यन्-न्ती-ती;
— काठयमानः, काठयिष्यमाणः, चाकठ्यमानः, चाकठिष्यमाणः;
कट्-कड्-कठौ-कठः; — — —
कठितम्-तः-काठितः-तम्, चिकठिषितः, चाकठितः-तवान्;
कठः, काठः, चिकठिषुः, चिकाठयिषुः, चाकठः;
कठितव्यम्, काठयितव्यम्, चिकठिषितव्यम्, चाकठितव्यम्;
कठनीयम्, काठनीयम्, चिकठिषणीयम्, चाकठनीयम्;
काठ्यम्, काठ्यम्, चिकठिष्यम्, चाकठ्यम्;
ईषत्कठः, दुष्कठः, सुकठः; —
कठ्यमानः, काठ्यमानः, चिकठिष्यमाणः, चाकठ्यमानः;

* 'मठ कठ मदनिवासयोः' इति मैत्रेयरक्षितसम्मतः पाठः ।

[A]काठः, काठः, चिकठिषः, चाकठः ;

कठितुम्, काठयितुम्, चिकठिषितुम्, चाकठितुम् ;

[1]कट्ठिः, काठना, चिकठिषा, चिकाठयिषा, चाकठा ;

कठनम्, काठनम्, चिकठिषणम्, चाकठनम् ;

कठित्वा, काठयित्वा, चिकठिषित्वा, चाकठित्वा ;

प्रकठ्य, प्रकाठ्य, प्रचिकठिष्य, प्रचाकठ्य ;

काठम् २, } काठम् २, } चिकठिषम् २, } चाकठम् २; }
कठित्वा २, } काठयित्वा २, } चिकठिषित्वा २, } चाकठित्वा २; }

[2]कठिनम्, [3]कठोरम्.

(149) "कठि शोके" (I-भ्वादिः-264. अक. सेट्. आत्म.)

'—अथ कण्ठते। शोके यो कण्ठयेत् कण्ठेत्, कठेत् स्यात् कृच्छ्रजीवने ॥' (श्लो-79) इति देवः। प्रायेणायमुत्पूर्वक एव प्रयुज्यते।

शोकः=सोत्कण्ठस्मरणम्। उत्कण्ठामात्रे त्वकर्मकः।

उत्कण्ठकः-ण्ठिका, कण्ठकः-ण्ठिका, उचिकण्ठिषकः-षिका, चाकण्ठकः-ण्ठिका;

कण्ठिता-त्री, कण्ठयिता-त्री, चिकण्ठिषिता-त्री, चाकण्ठिता-त्री ;

— कण्ठयन्-न्ती, कण्ठयिष्यन्-न्ती-ती ;

[B]उत्कण्ठमानः, कण्ठयमानः, चिकण्ठिषमाणः, चाकण्ठ्यमानः ;

कण्ठिष्यमाणः, कण्ठयिष्यमाणः, चिकण्ठिषिष्यमाणः, चाकण्ठिष्यमाणः ;

कन्-कण्ठौ-कण्ठः ; — — —

[C]कण्ठितम्-तः, कण्ठितम्-तः, चिकण्ठिषितः, चाकण्ठितः-तवान् ;

---

1. 'तितुत्र—' (7-2-9) इति नेट्। 'ष्टुना ष्टुः' (8-4-41.) इति ष्टुत्वम्।
2. औणादिके (द. उ. 5-15) इनच् प्रत्यये रूपम्।
3. औणादिके (द. उ. 8-29) ओरप्रत्यये रूपम्।

A. 'वनाश्रयत्वेऽपि सकाठपर्यङ्कठन्मृगालीहठकर्मवर्जितान्।
रोठन्तृणसत्लुठितैः अनोठकैर्नान् घनाढ्यैर्मणिपीठसंश्रयैः ॥' धा. का. 1-41.

B. 'अशिथ्यवचाल्यमिकं तमेल कृता यदायं प्रयियासयन्तः।
आदिष्ट अताम्जिहिषन्दाऽसावुत्कण्ठमानो भरतो गुरूणाम् ॥' भ. का. 3-25.

C. 'भनन् कुमारेषु शुभाध्वनैव वन् प्रमन् मुचोत्कण्ठितगोपिके हरौ।'
धा. का. 1-35.

कण्ठः, [1]उत्कण्ठी, कण्ठः, चिकण्ठिषुः, चिकण्ठयिषुः, चाकण्ठः;

कण्ठितव्यम्, कण्ठयितव्यम्, चिकण्ठिषितव्यम्, चाकण्ठितव्यम्;

कण्ठनीयम्, कण्ठनीयम्, चिकण्ठिषणीयम्, चाकण्ठनीयम्;

कण्ठ्यम्, कण्ठ्यम्, चिकण्ठिष्यम्, चाकण्ठ्यम्;

ईषत्कण्ठः, दुष्कण्ठः, सुकण्ठः;

कण्ठ्यमानः, कण्ठ्यमानः, चिकण्ठिष्यमाणः, चाकण्ठ्यमानः;

कण्ठः, कण्ठः, चिकण्ठिषः, चाकण्ठः;

कण्ठितुम्, कण्ठयितुम्, चिकण्ठिषितुम्, चाकण्ठितुम्;

उत्कण्ठा, कण्ठना, चिकण्ठिषा, चिकण्ठयिषा, चाकण्ठा;

कण्ठनम्, कण्ठनम्, चिकण्ठिषणम्, चाकण्ठनम्;

कण्ठित्वा, कण्ठयित्वा, चिकण्ठिषित्वा, चाकण्ठित्वा;

उत्कण्ठ्य, प्रकण्ठ्य, उच्चिकण्ठिष्य, उच्चाकण्ठ्य;

कण्ठम् २, } कण्ठम् २, } चिकण्ठिषम् २, } चाकण्ठम् २; }
कण्ठित्वा २, } कण्ठयित्वा २, } चिकण्ठिषित्वा २, } चाकण्ठित्वा २. }

(160) "कठि शोके" (X-चुरादिः-1848. अक. सेट्. उभ.)

'—अथ कण्ठते। शोके स्यात् कण्ठयेत् कण्ठेत्, कठे स्यात् कृच्छ्रजीवने॥' (श्लो. 79) इति देवः। प्रायेणोत्पूर्वः उत्कण्ठार्थकः।

इदित्वात् णिज्विकल्पः। णिजभावपक्षे उत्कण्ठकः-चिकण्ठिषकः, चाकण्ठकः-इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककण्ठतिवत् (149) ज्ञेयानि। णिजभावपक्षे 'शेषात् कर्तरि परस्मैपदम्' (1-3-78) इति शास्त्रात् शतरि उत्कण्ठन्-[A]न्ती, उत्कण्ठिष्यन्-न्ती-ती, इति रूपमिति विशेषः। ण्यन्तात् सनि तु—

चिकण्ठयिषकः-षिका, चिकण्ठयिषिता-त्री, चिकण्ठयिषन्-न्ती, चिकण्ठयिषिष्यन्-न्ती-ती, चिकण्ठयिषमाणः, चिकण्ठयिषिष्यमाणः, चिकण्ठयिषितः-तवान्, चिकण्ठयिषुः, चिकण्ठयिषितव्यम्, चिकण्ठयिषणीयम्, चिकण्ठयिष्यम्, चिकण्ठयिष्यमाणः, ईषच्चिकण्ठयिषः,

---

1. 'सुप्यजातौ णिनिस्ताच्छील्ये' (3-2-78) इति णिनिः।

A. 'श्रियथोत्कण्ठन्त्यो ददृशुरजितं सृष्टतनवः नृपस्त्वेतमामर्षत रिपुजनाधर्षितबलः॥' धा. का. 3-52.

दुश्चिकण्ठयिषः-सुचिकण्ठयिषः, चिकण्ठयिषः, चिकण्ठयिषितुम्, चिकण्ठयिषा, चिकण्ठयिषणम्, चिकण्ठयिषित्वा, सञ्चिकण्ठयिष्य, चिकण्ठयिषम् २-- चिकण्ठयिषित्वा २, इत्यादीनि रूपाणि--इति विशेषः ।

(151) "कड मदे" (I-भ्वादिः-360. सक. सेट्. पर.)

काडकः-डिका, काडकः-डिका, चिकडिषकः-षिका, चाकडकः-डिका, इति सर्वाण्यपि रूपाणि भौवादिककठधातुवत् (148) बोध्यानि ।

(152) "कड मदे" (VI-तुदादिः-1380. सक. सेट्. पर. कुटादिः ।)

शतरि परम्-कडन्-न्ती-ती, इति रूपम् । 'आच्छीनद्योर्नुम्' (7-1-80) इति नुम् विकल्पः । अन्यत्र सर्वत्रापि भौवादिककठतिवत्-- (148) रूपाणि ज्ञेयानि । डकारान्तप्रकरणात् अस्य कुटादौ पाठः । कुटादिपाठस्य फलं किमपि न ।

(153) "कडि मेदने" (I-भ्वादिः-282. सक. सेट्. आत्म.)

'कण्डयेदिति मेदे णौ, मदे तु शपि कण्डते ।' (श्लो. 86) इति देवः ।

कण्डकः-ण्डिका, कण्डकः-ण्डिका, चिकण्डिषकः-षिका, चाकण्डकः-ण्डिका-इत्यादीनि रूपाणि भौवादिककण्ठतिवत् (149) ज्ञेयानि ।

(154) "कडि मदे" (I-भ्वादिः-360. अक. सेट्. पर.)

'कड मदे' (151) इत्यस्य पाठान्तरमिदम् ।

कण्डकः-ण्डिका, कण्डकः-ण्डिका, चिकण्डिषकः-षिका, चाकण्डकः-ण्डिका-इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककण्ठतिवत (149) ज्ञेयानि ।

(155) "कडि मेदने" (X-चुरादिः-1582. सक. सेट्. उभ.)

'कण्डयेदिति मेदे णौ, मदे तु शपि कण्डते ।' (श्लो-86) इति देवः ।

इदित्त्वाण्णिचो वैकल्पिकत्वम् । णिजभावपक्षे--कण्डकः-ण्डिका, चिकण्डिषकः-षिका, चाकण्डकः-ण्डिका, इत्यादीनि रूपाणि 'कठि शोके' (149) इति भौवादिकधातुवत् ज्ञेयानि । णिच्पक्षे ॥ कण्डकः-ण्डिका, चिकण्डयिषकः-षिका, इत्यादीनि रूपाणि चौरादिककण्ठयतिवत् (150) ज्ञेयानि ।

कण्ठः, [1]उत्कण्ठी, कण्ठः, चिकण्ठिषुः, चिकण्ठयिषुः, चाकण्ठः ;
कण्ठितव्यम्, कण्ठयितव्यम्, चिकण्ठिषितव्यम्, चाकण्ठितव्यम् ;
कण्ठनीयम्, कण्ठनीयम्, चिकण्ठिषणीयम्, चाकण्ठनीयम् ;
कण्ठ्यम्, कण्ठ्यम्, चिकण्ठिष्यम्, चाकण्ठ्यम् ;
ईषत्कण्ठः, दुष्कण्ठः, सुकण्ठः ; ——
कण्ठ्यमानः, कण्ठ्यमानः, चिकण्ठिष्यमाणः, चाकण्ठ्यमानः ;
कण्ठः, कण्ठः, चिकण्ठिषः, चाकण्ठः ;
कण्ठितुम्, कण्ठयितुम्, चिकण्ठिषितुम्, चाकण्ठितुम् ;
उत्कण्ठा, कण्ठना, चिकण्ठिषा, चिकण्ठयिषा, चाकण्ठा ;
कण्ठनम्, कण्ठनम्, चिकण्ठिषणम्, चाकण्ठनम् ;
कण्ठित्वा, कण्ठयित्वा, चिकण्ठिषित्वा, चाकण्ठित्वा ;
उत्कण्ठ्य, प्रकण्ठ्य, उच्चिकण्ठिष्य, उच्चाकण्ठ्य ;
कण्ठम् २, कण्ठित्वा २, } कण्ठम् २, कण्ठयित्वा २, } चिकण्ठिषम् २, चिकण्ठिषित्वा २, } चाकण्ठम् २ ; चाकण्ठित्वा २. }

## (150) "कठि शोके" (X-चुरादिः-1848. अक. सेट्. उभ.)

'—अथ कण्ठते। शोके स्यात् कण्ठयेत् कण्ठेत्, कठे स्यात् कृच्छ्रजीवने॥' (श्लो. 79) इति देवः। प्रायेणोत्पूर्वः उत्कण्ठार्थकः।

इदित्वात् णिज्विकल्पः। णिजभावपक्षे उत्कण्ठकः-चिकण्ठिषकः, चाकण्ठकः-इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककण्ठतिवत् (149) ज्ञेयानि। णिजभावपक्षे 'शेषात् कर्तरि परस्मैपदम्' (1-3-78) इति शासनात् शतरि उत्कण्ठन्-[A]न्ती, उत्कण्ठिष्यन्-न्ती-ती, इति रूपमिति विशेषः। ण्यन्तात् सनि तु—

चिकण्ठयिषकः-यिका, चिकण्ठयिषिता-त्री, चिकण्ठयिषन्-न्ती, चिकण्ठयिषिष्यन्-न्ती-ती, चिकण्ठयिषमाणः, चिकण्ठयिषिष्यमाणः, चिकण्ठयिषितः-तवान्, चिकण्ठयिषुः, चिकण्ठयिषितव्यम्, चिकण्ठयिषणीयम्, चिकण्ठयिष्यम्, चिकण्ठयिष्यमाणः, ईषच्चिकण्ठयिषः,

---

1. 'सुप्यजातौ णिनिस्ताच्छील्ये' (3-2-78) इति णिनिः।
A. 'प्रियश्चोरकण्ठन्त्यो ददृशुरजितं सृष्टनवः तृपस्त्वेतनामर्षतं रिपुजनाधर्षितबलः॥' धा. का. 3-52.

दुश्चिकण्ठयिष:-सुचिकण्ठयिषः, चिकण्ठयिषः, चिकण्ठयिषितुम्, चिकण्ठ-यिषा, चिकण्ठयिषणम्, चिकण्ठयिषित्वा, सञ्चिकण्ठयिष्य, चिकण्ठयिषम् २-चिकण्ठयिषित्वा २, इत्यादीनि रूपाणि—इति विशेषः ।

(151) "कड मदे" (I-भ्वादिः-360. सक. सेट्. पर.)

काडकः-डिका, काडकः-डिका, चिकडिषकः-षिका, चाकडकः-डिका, इति सर्वाण्यपि रूपाणि भौवादिककठधातुवत् (148) बोध्यानि ।

(152) "कड मदे" (VI-तुदादिः-1380. सक. सेट्. पर. कुटादिः।)

शतरि परम्-कडन्-न्ती-ती, इति रूपम् । 'आच्छीनद्योर्नुम्' (7-1-80) इति नुम् विकल्पः । अन्यत्र सर्वत्रापि भौवादिककठतिवत्—(148) रूपाणि ज्ञेयानि । डकारान्तप्रकरणात् अस्य कुटादौ पाठः । कुटादि-पाठस्य फलं किमपि न ।

(153) "कडि मेदने" (I-भ्वादिः-282. सक. सेट्. आत्म.)

'कण्डयेदिति भेदे णौ, मदे तु शपि कण्डते ।' (श्लो. 86) इति देवः ।

कण्डकः-ण्डिका, कण्डकः-ण्डिका, चिकण्डिषकः-षिका, चाकण्डकः-ण्डिका-इत्यादीनि रूपाणि भौवादिककण्ठतिवत् (149) ज्ञेयानि ।

(154) "कडि मदे" (I-भ्वादिः-360. अक. सेट्. पर.)

'कड मदे' (151) इत्यस्य पाठान्तरमिदम् ।

कण्डकः-ण्डिका, कण्डकः-ण्डिका, चिकण्डिषकः-षिका, चाकण्डकः-ण्डिका-इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककण्ठतिवत् (149) ज्ञेयानि ।

(155) "कडि भेदने" (X-चुरादिः-1582. सक. सेट्. उभ.)

'कण्डयेदिति भेदे णौ, मदे तु शपि कण्डते ।' (श्लो-86) इति देवः ।

इदित्त्वाण्णिचो वैकल्पिकत्वम् । णिजभावपक्षे—कण्डकः-ण्डिका, चिकण्डिषकः-षिका, चाकण्डकः-ण्डिका, इत्यादीनि रूपाणि 'कठि शोके' (149) इति भौवादिकधातुवत् ज्ञेयानि । णिच्पक्षे तु कण्डकः-ण्डिका, चिकण्डयिषकः-षिका, इत्यादीनि रूपाणि चौरादिककण्ठयतिवत् (150) ज्ञेयानि ।

## (156) " कड्ड कार्कश्ये " (I-भ्वादिः-349. अक.सेट्.पर.)

### अयं दोपधः ।

कड्डकः-ड्डिका, कड्डकः-ड्डिका, चिकड्डिषकः-षिका, चाकड्डकः-ड्डिका ;
कड्डिता-त्री, कड्डयिता-त्री, चिकड्डिषिता-त्री, चाकड्डिता-त्री ;
कड्डन्-न्ती, कड्डयन्-न्ती, चिकड्डिषन्-न्ती —
कड्डिष्यन्-न्ती-ती, कड्डयिष्यन्-न्ती-ती, चिकड्डिषिष्यन्-न्ती-ती ;
— कड्डयमानः, कड्डयिष्यमाणः, चाकड्डयमानः, चाकड्डिष्यमाणः ;
[1]कत्[A]-कद्-कड्-ड्-कड्डौ-कड्डः ; — —
कड्डितम्-तः, कड्डितम्-तः, चिकड्डिषितः, चाकड्डितः-तवान् ;
कड्डः, कड्डः, चिकड्डिषुः, चिकड्डयिषुः, चाकड्डः ;
कड्डितव्यम्, कड्डयितव्यम्, चिकड्डिषितव्यम्, चाकड्डितव्यम् ;
कड्डनीयम्, कड्डनीयम्, चिकड्डिषणीयम्, चाकड्डनीयम् ;
कड्ड्यम्, कड्ड्यम्, चिकड्डिष्यम्, चाकड्ड्यम् ;
ईषत्कड्डः-दुष्कड्डः-सुकड्डः ; —
कड्ड्यमानः, कड्ड्यमानः, चिकड्डिष्यमाणः, चाकड्ड्यमानः ;
कड्डः, कड्डः, चिकड्डिषः, चाकड्डः ;
कड्डितुम्, कड्डयितुम्, चिकड्डिषितुम्, चाकड्डितुम् ;
कड्डा, कड्डना, चिकड्डिषा, चिकड्डयिषा, चाकड्डा ;
कड्डनम्, कड्डनम्, चिकड्डिषणम्, चाकड्डनम् ;
कड्डित्वा, कड्डयित्वा, चिकड्डिषित्वा, चाकड्डित्वा ;
प्रकड्ड्य, प्रकड्ड्य, प्रचिकड्डिष्य, प्रचाकड्ड्य ;
कड्डम् २, } कड्डम् २, } चिकड्डिषम् २, } चाकड्डम् २ ; }
कड्डित्वा २, } कड्डयित्वा २, } चिकड्डिषित्वा २, } चाकड्डित्वा २. }

---

1. डकारस्य 'संयोगान्तस्य–' (8-2-23) इति लोपे, दकारस्य चर्त्वे च रूपम् । क्षीरस्वामी डोपधमसुं धातुं पठति । तत्पक्षे, डकारस्य संयोगान्तलोपे, उपधाडकारस्य चर्त्वविकल्पे च 'कट्-कड्—' इति रूपम् ।

A. 'अकद्दरिक्ष्वेडनधूततोडकान् प्रहूडितान् होडदरोडयमिक्षुकैः ।
प्रोडकानग्नविलोलितैर्हेतान् रतावडद्भिर्ललनाजनैः कलैः ॥' धा. का. 1·46.

(232) "कुशि भाषार्थः" (X-चुरादिः-1766. सक. सेट्. उभ.)

आस्वदीयः ।

कुंशकः-शिका, चुकुंशयिषकः-षिका, [1]कुंशकः-शिका, चुकुंशिषकः-षिका, चोकुंशकः-शिका ;

कुंशयिता-त्री, चुकुंशयिषिता-त्री, कुंशिता-त्री, चुकुंशिषिता-त्री, चोकुंशिता-त्री ;

कुंशयन्-न्ती, चुकुंशयिषन्-न्ती, [2]कुंशन्-न्ती, [3]चुकुंशिषन्-न्ती ; —

कुंशयिष्यन्-न्ती-ती, चुकुंशयिषिष्यन्-न्ती-ती, कुंशिष्यन्-न्ती-ती, चुकुंशिषिष्यन्-न्ती-ती ;

कुंशयमानः, चुकुंशयिषमाणः, — चोकुंश्यमानः ;

कुंशयिष्यमाणः, चुकुंशयिषिष्यमाणः, — चोकुंशिष्यमाणः ;

[4]कुन्-कुंशौ-कुंशः ; — — —

कुंशितः, चुकुंशयिषितः-तम्, कुंशितम्-तः, चुकुंशिषितः, चोकुंशितः-तवान् ;

कुंशः, चुकुंशयिषुः, कुंशः, चुकुंशिषुः, चोकुंशः ;

कुंशयितव्यम्, चुकुंशयिषितव्यम्, कुंशितव्यम्, चुकुंशिषितव्यम्, चोकुंशितव्यम् ;

कुंशनीयम्, चुकुंशयिषणीयम्, कुंशनीयम्, चुकुंशिषणीयम्, चोकुंशनीयम् ;

[A]कुंश्यम्, चुकुंशयिष्यम्, कुंश्यम्, चुकुंशिष्यम्, चोकुंश्यम् ;

ईषत्कुंशः-दुष्कुंशः-सुकुंशः ; — — —

कुंश्यमानः, चुकुंशयिष्यमाणः, कुंश्यमानः, चुकुंशिष्यमाणः, चोकुंश्यमानः ;

कुंशः, चुकुंशयिषः, कुंशः, चुकुंशिषः, चोकुंशः ;

---

1. 'आस्वदः सकर्मकात्' (गणसूत्रं चुरादौ) इति, इदित्करणसामर्थ्यात् वा णिचो वैकल्पिकत्वम् । णिजभावपक्षे शुद्धात्-सन्नन्तात्-यङन्ताच्च क्रमेण रूपाणि विलिखितानीति ज्ञेयम् ।
2. णिजभावपक्षे 'शेषात् कर्तरि—' (1-3-78) इति परस्मैपदमेव ।
3. 'पूर्ववत् सनः' (1-3-62) इति परस्मैपदमेव । तेन सन्नन्तात् शानच् न ।
4. 'संयोगान्तस्य—' (8-2-23) इति शकारस्य लोपः ।

A. 'कश्चित् कष्टमविंसयत् रणमिमं कुंश्यं त्वया दंश्यतां
नाकुंश्यं परिघाटयेति च परेणोदण्डितोऽबृंहयत् ।' धा. का. 3-44.

कुंशयितुम्, चुकुंशयिषितुम्, कुंशितुम्, चुकुंशिषितुम्, चोकुंशितुम्;
कुंशना, चुकुंशयिषा, कुंशा, चुकुंशिषा, चोकुंशा;
कुंशनम्, चुकुंशयिषणम्, कुंशनम्, चुकुंशिषणम्, चोकुंशनम्;
कुंशयित्वा, चुकुंशयिषित्वा, कुंशित्वा, चुकुंशिषित्वा, चोकुंशित्वा;
प्रकुंश्य, प्रचुकुंशयिष्य, प्रकुंश्य, प्रचुकुंशिष्य, प्रचोकुंश्य;
कुंशम् २, कुंशयित्वा २, } चुकुंशयिषम् २, चुकुंशयिषित्वा २, } कुंशम् २, कुंशित्वा २, } चुकुंशिषम् २, चुकुंशिषित्वा २, } चोकुंशम् २; चोकुंशित्वा २. }

## (233) "कुष निष्कर्षे" (IX-क्र्यादिः-1518. सक. सेट्. पर.)

निष्कर्षः=बहिर्निस्सारणम्।

कोषकः-षिका, कोषकः-षिका, [1]चुकुषिषकः-चुकोषिषकः-षिका,
[2]निश्चुकुषिषकः-निश्चुकोषिषकः-षिका, निश्चुकुक्षकः-क्षिका, चोकुषकः-षिका;
कोषिता, [3]निष्कोषिता, निष्कोष्टा-ष्ट्री, } त्री, कोषयिता-त्री, चुकुषिषिता-चुकोषिषिता-त्री,
निश्चुकुषिषिता-निश्चुकोषिषिता-निश्चुकुक्षिता-त्री,
चोकुषिता-त्री;
[4]कुष्णन्-ती, कोषयन्-न्ती, चुकुषिषन्-चुकोषिषन्-न्ती;
निश्चुकुषिषन्-निश्चुकोषिषन्-निश्चुकुक्षन्-न्ती; —

---

1. 'रलो व्युपधात्—' (1-2-26) इति सनः कित्त्वविकल्पः। तेन गुणः कदाचित्, कदाचिन्न भवति। एवं सन्नन्ते सर्वत्र ज्ञेयम्।
2. 'निरः कुषः' (7-2-46) इति 'निर्' पूर्वकात् कुषेः परस्य वलादेरार्धधातुकस्य इड्विकल्पः। इट्पक्षे कित्त्वं वैकल्पिकम्। तेन रूपद्वयम्। इडभावपक्षे 'हलन्ताच्च' (1-2-10) इत्यनेन कित्त्वात् गुणाभावे 'निश्चुकुक्षकः' इति रूपम्। एवं निर्पूर्वके सर्वत्र सन्नन्ते रूपत्रयस्योपपत्तिः।
3. 'निरः कुषः' (7-2-46) इति 'निर्' पूर्वकात् कुषेरार्धधातुकस्येड्विकल्पः। एवं तव्यदादिष्वपि ज्ञेयम्।
4. 'क्र्यादिभ्यः श्ना' (3-1-81) इति श्ना विकरणप्रत्ययः। 'श्नाऽभ्यस्तयोरातः' (6-4-112) इत्याकारलोपः। श्नप्रत्ययस्य सार्वधातुकत्वेन ङिद्वद्भावाद्धातोर्गुणो न। 'रषाभ्यां—' (8-4-1) इति णत्वम्।

कोपिष्यन्, निष्कोपिष्यन्, निष्कोक्ष्यन् — न्ती-ती, | कोपयिष्यन्-न्ती-ती, चुकुपिषिष्यन्-चुकोपिषिष्यन्-न्ती-ती; निश्चुकुपिषिष्यन्-निश्चुकोपिषिष्यन्-निश्चुकुक्षिष्यन्-न्ती-ती;

— कोपयमानः, कोपयिष्यमाणः, चोकुप्यमाणः, चोकुपिष्यमाणः;

कुट्-कुद् कुपौ-कुपः; — — —

कुपितम्-तः, [1]निष्कुपितम्-[A]तः, | कोपितः, चुकुपिषितः-चुकोपिषितः, निश्चुकुपिषितः-निश्चुकोपिषितः निश्चुकुक्षितः, | चोकुपितः-तवान्;

कुपः, कोपः, चुकुपिषुः, चुकोपिषुः, निश्चुकुपिषुः निश्चुकोपिषुः निश्चुकुक्षुः | चोकुपः;

कोपितव्यम्, निष्कोपितव्यम्, निष्कोप्टव्यम्, | कोपयितव्यम्, चुकुपिषितव्यम्-चुकोपिषितव्यम्-निश्चुकुपिषितव्यम्-निश्चुकोपिषितव्यम्, निश्चुकुक्षितव्यम्, | चोकुपितव्यम्;

कोपणीयम्-कोपणीयम्, चुकुपिषणीयम्-चुकोपिषणीयम्, निश्चुकुपिषणीयम्, निश्चुकोपिषणीयम्, निश्चुकुक्षणीयम्, | चोकुपणीयम्;

कोप्यम्, कोप्यम्, चुकुपिष्यम्-चुकोपिष्यम्, निश्चुकुपिष्यम्-निश्चुकोपिष्यम्, निश्चुकुक्ष्यम्, | चोकुप्यम्;

ईषत्कोपः-दुष्कोपः-सुकोपः; — —

कुप्यमानः, कोप्यमानः, चुकुपिष्यमाणः-चुकोपिष्यमाणः-निश्चुकुपिष्यमाणः-निश्चुकोपिष्यमाणः-निश्चुकुक्ष्यमाणः, | चोकुप्यमाणः;

कोपः, कोपः, चुकुपिषः-चुकोपिषः-निश्चुकुपिषः-निश्चुकोपिषः-निश्चुकुक्षः, चोकुपः;

कोपितुम्, निष्कोप्टुम्, निष्कोपितुम्, | कोपयितुम्, चुकुपिषितुम्-चुकोपिषितुम्-निश्चुकुपिषितुम्-निश्चुकोपिषितुम्-निश्चुकुक्षितुम्, | चोकुपितुम्;

---

1. 'यस्य विभाषा' (7-2-15) इति इण्णिषेधे प्राप्ते 'इण्निष्ठायाम्' (7-2-47) इति नित्यमिट्।

A. 'निष्कोपितव्यान् निष्कोप्टुं प्राणान् दशमुखात्मजात्। आदाय परिघं तस्थौ वनाद्विष्कुपितद्रुमः ॥' भ. का. 9-30.

कुष्टिः, कोषणा, चुकुषिषा-चुकोषिषा-निश्चुकुषिषा-निश्चुकोषिषा-निःचुकुक्षा, चोकुषा ;

कोषणम्, कोषणम्, चुकुषिषणम्-चुकोषिषणम्-निश्चुकुषिषणम्-निश्चुकोषिषणम्-निश्चुकुक्षणम्, चोकुषणम् ;

[1]कुषित्वा[A], कोषयित्वा, चुकुषिषित्वा-चुकोषिषित्वा, चोकुषित्वा ;

निकुष्य } निष्कोष्य, संचुकुषिष्य-संचुकोषिष्य- } निश्चोकुष्य ;
[B]विकुष्य } निश्चुकुषिष्य-निश्चुकोषिष्य-निश्चुकुक्ष्य, }

कोषम् २, } कोषम् २, } चुकुषिषम् २, चुकोषिषम् २, }
कुषित्वा २, } कोषयित्वा २, } चुकुषिषित्वा २, चुकोषिषित्वा २, }
निश्चुकुषिषम् २, निश्चुकोषिषम् २,
निश्चुकुक्षम् २, — चोकुषम् २ ; }
चोकुषित्वा २. }

## (234) "कुस संश्लेषणे" (IV-दिवादिः-1218. अक. सेट्. पर.)

'कुश—' इति दुर्गः ।

कोसकः-सिका, कोसकः-सिका, [2]चुकुसिषकः-चुकोसिषकः-षिका, चोकुसकः-सिका ;

कोसिता-त्री, कोसयिता-त्री, चुकुसिषिता-चुकोसिषिता-त्री, चोकुसिता-त्री ;

[3]कुस्यन्[C]-न्ती, कोसयन्-न्ती, चुकुसिषन्-चुकोसिषन्-न्ती ; —

कोसिष्यन्-न्ती-ती, कोसयिष्यन्-न्ती-ती, चुकुसिषिष्यन्-चुकोसिषिष्यन्-न्ती-ती ;

---

1. क्त्वायां 'रलो व्युपधात्—' (1-2-26) इति प्राप्ते वैकल्पिके कित्त्वे बाधित्वा, 'मृडमृदगुधकुष—' (1-2-7) इति नित्यं कित्त्वम् ।
2. 'रलो व्युपधात्—' (1-2-26) इति कित्त्वविकल्पः । एवं क्त्वायामपि ।
3. 'दिवादिभ्यः श्यन्' (3-1-69) इति श्यन् ।

A. 'बभूव याऽधिशैलेन्द्रं मृदितेवेन्द्रगोचरम् ।
कुषित्वा जगतां सारं सैका शङ्के कृता भुवि ॥' भ. का. 7-95.

B. 'तद्वन्यनं परिहरन् गतिभिर्निकुष्य पृष्ठे करोन्मृदितपुच्छमकर्षदेनम् ।
भूयो निपात्य मृडितस्वजनः स गृध्नन् दन्तौ विकुष्य गजमुत्कुषितं व्यनक्नात् ॥' धा. का. 3-10.

C. 'अस्तायासविजस्तविश्वनसनो निर्दस्तवासैर्नुनः
वैदन्योषकृदप्लुष· विसितधीकुस्यज्जनाह्वोसुसम् ।' धा. का. 2-66.

[1]व्यतिकुस्यमानः, कोसयमानः, — चोकुस्यमानः ;
व्यतिकोसिष्यमाणः, कोसयिष्यमाणः, — चोकुसिष्यमाणः ;
[2]कूः-कुसौ-कुसः ; — —
कुसितम्-तः, [3]कुसितायी, कोसितः, चुकुसिषितः-चुकोसिषितः, चोकुसितः-तवान् ;
कुसः, [4]कुशः, कोसः, चुकुसिषुः-चुकोसिषुः, चोकुसः ;
कोसितव्यम्, कोसयितव्यम्, चुकुसिषितव्यम्-चुकोसिषितव्यम्, चोकुसितव्यम् ;
कोसनीयम्, कोसनीयम्, चुकुसिषणीयम्-चुकोसिषणीयम्, चोकुसनीयम् ;
कोस्यम्, कोस्यम्, चुकुसिष्यम्-चुकोसिष्यम्, चोकुस्यम् ;
ईषत्कोसः-दुष्कोसः-सुकोसः ; — —
कुस्यमानः, कोस्यमानः, चुकुसिष्यमाणः-चुकोसिष्यमाणः-चोकुस्यमानः ;
कोसः, कोसः, चुकुसिषः-चुकोसिषः, चोकुसः ;
कोसितुम्, कोसयितुम्, चुकुसिषितुम्-चुकोसिषितुम्, चोकुसितुम् ;
कुसितिः, कोसना, चुकुसिषा-चुकोसिषा, चोकुसा ;
कोसनम्, कोसनम्, चुकुसिषणम्-चुकोसिषणम्, चोकुसनम् ;
कुसित्वा / कोसित्वा } कोसयित्वा, चुकुसिषित्वा-चुकोसिषित्वा, चोकुसित्वा ;
प्रकुस्य, प्रकोस्य, प्रचुकुसिष्य-प्रचुकोसिष्य, प्रचोकुस्य ;
कोसम् २, कुसित्वा-कोसित्वा २, } कोसम् २, कोसयित्वा २, } चुकुसिषम् २-चुकोसिषम् २, चुकुसिषित्वा २-चुकोसिषित्वा २, चोकुसम् २; चोकुसित्वा २. }

---

1. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच् ।
2. 'ससजुषो रुः' (8-2-66) इति रुत्वे, 'र्वोरुपधाया दीर्घ इकः' (8-2-76) इति दीर्घः ।
3. 'वृषाकप्यग्निकुसितकुसिदानामुदात्तः' (4-1-37) इति प्रकृतेः ऐकारः ङीप् च पुंयोगे । कुसितः=वृद्ध्याजीवी, तत्पत्नी कुसितायी ।
4. तालव्यान्तपाठे पचाद्यच् (3-1-134) । कुशः=दर्भः ।

(235) "कुसि भाषार्थः" (X-चुरादिः-1764. सक. सेट्. उभ.)

आस्वदीयः ।

'कुशि भाषार्थः' (232) इति पूर्वलिखितचौरादिकधातुवत्सर्वाण्यपि रूपाणि ज्ञेयानि । पचाद्यचि-भ्रुकुंसः-भ्रकुंसः-इति रूपे । 'भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः' इत्यमरः । भ्रुवा कुंसयति=भाषयतीति भ्रुकुंसः । स्त्रीवेषधारी नर्तकः ।

(236) "कुस्म कुत्सितस्मयने" (X-चुरादिः-1712. अक. सेट्. आत्म.)

आकुस्मीयः ।

| | |
|---|---|
| [1]कुस्मकः-स्मिका, | चुकुस्मयिषकः-षिका ; |
| कुस्मयिता-त्री, | चुकुस्मयिषिता-त्री ; |
| [2]कुस्मयमानः[A], | [3]चुकुस्मयिषमाणः ; |
| कुस्मयिष्यमाणः, | चुकुस्मयिषिष्यमाणः ; |
| [4]कुः-कुस्मौ-कुस्मः ; | — |
| [5]कुस्मितम्-तः-तवान्, | चुकुस्मयिषितः-तवान् ; |
| कुस्मः, [6]कुस्मनः, | चुकुस्मयिषुः ; |
| कुस्मयितव्यम्, | चुकुस्मयिषितव्यम् ; |
| कुस्मनीयम्, | चुकुस्मयिषणीयम् ; |
| कुस्म्यम्, | चुकुस्मयिष्यम् ; |
| ईषत्कुस्मः-दुष्कुस्मः-सुकुस्मः ; | — |
| कुस्म्यमानः, | चुकुस्मयिष्यमाणः ; |

| | |
|---|---|
| कुस्मः, | चुकुस्मयिषः ; |
| कुस्मयितुम्, | चुकुस्मयिषितुम् ; |
| कुस्मना, | चुकुस्मयिषा ; |
| कुस्मनम्, | चुकुस्मयिषणम् ; |
| कुस्मयित्वा, | चुकुस्मयिषित्वा ; |
| प्रकुस्म्य, | प्रचुकुस्मयिष्य ; |
| कुस्मम् २, | चुकुस्मयिषम् २ ; |
| कुस्मयित्वा २, | चुकुस्मयिषित्वा २. |

'कुस्म नाम्नो वा' (गणसूत्रं चुरादौ) इति पठ्यते। '—'कुस्म' इति धातुः कुत्सितस्मये वर्तते।' इति दुर्गमैत्रेयौ। तदनुसारेण ण्यन्तात्, ण्यन्तप्रकृतिकसन्नन्ताच्च सर्वाणि रूपाणि प्रदर्शितानि। गणसूत्रस्य एवमर्थाभ्युपगमे 'नाम्नः' इत्यस्य वैयर्थ्यमापतति। तदर्थे—"अथ वा, 'कुस्म' इति प्रातिपदिकात् धात्वर्थे णिज्भवति।" इति बहुभिर्व्याख्यातम्। तत्र पक्षे णिचः प्रातिपदिकप्रकृतिकत्वेन, आर्धधातुकत्वं नास्ति। अतः 'अतो लोपः' (6-4-48) इति लोपो न भवति। किन्तु—'प्रातिपदिकाद् धात्वर्थे बहुलमिष्ठवच्च' (गणसूत्रं चुरादौ) इति इष्ठवद्भावातिदेशेन प्रातिपदिकान्त्यस्य अकारस्य लोपो वक्तव्यः। एवं सति, कुस्मकः-स्मिका, चुकुस्मयिषकः-पिका, इत्यादीनि सर्वाण्यपि रूपाणि पुरस्तात् लिखितदिशा ज्ञेयानि। अर्थभेदः परमुभयोर्विधते—'कुस्म' धातोः कुत्सितस्मयनमात्रस्य प्रतीतिः। प्रातिपदिकप्रकृतिकण्यन्तस्य तु कुत्सितस्मयनकर्मककरणप्रतीतिः—इति विशेषः। न चैवं सति 'प्रातिपदिकाद् धात्वर्थे बहुलमिष्ठवच्च' (ग. सू. चुरादौ) इत्येव णिचि सिद्धे सति, अत्र पाठस्य वैयर्थ्यमाशङ्क्यम्। 'प्रातिपदिकाद् धात्वर्थे—' (ग. सू. चुरादौ) इति णिजुत्पत्तौ परस्मैपदद्वयं स्यात्। अत्र पाठात्तु आकुस्मीयत्वेन आत्मनेपदमेवेति विशेषः।

(237) "कुह विस्मापने" (X-चुरादिः-1901. सक. सेट्. आत्म.)

अदन्तः, आगर्वीयः।

| | |
|---|---|
| [1]कुहकः-हिका, | चुकुहयिषकः-पिका ; |

| | |
|---|---|
| कुहयिता-त्री, | चुकुहयिषिता त्री ; |
| [1]कुहयमानः, | चुकुहयिषमाणः ; |
| कुहयिष्यमाणः, | चुकुहयिषिष्यमाणः ; |
| [2]कुट्-कुड्-कुहौ-कुहः ; | — |
| [3]कुहितम्-तः, | चुकुहयिषितः-तवान् ; |
| कुहः, | चुकुहयिषुः ; |
| कुहयितव्यम्, | चुकुहयिषितव्यम् ; |
| [4]कुहनीयम्, | चुकुहयिषणीयम् ; |
| कुह्यम्, | चुकुहयिष्यम् ; |
| ईषत्कुहः-दुष्कुहः-सुकुहः ; | — |
| कुह्यमानः, | चुकुहयिष्यमाणः ; |
| कुहः, | चुकुहयिषः ; |
| कुहयितुम्, | चुकुहयिषितुम् ; |
| कुहना, | चुकुहयिषा ; |
| कुहनम्, | चुकुहयिषणम् ; |
| कुहयित्वा, | चुकुहयिषित्वा ; |
| [5]सङ्कुहय्य, | सञ्चुकुहयिष्य ; |
| कुहम् २, कुहयित्वा २, | चुकुहयिषम् २ ; चुकुहयिषित्वा २; |
| [6]कुहूः. | |

---

1. 'आगर्वादात्मनेपदिनः' (गणसूत्रं चुरादौ) इत्यात्मनेपदम् ।
2. 'हो ढः' (8-2-31) इति ढत्वे जश्त्वचर्त्वयोश्च रूपम् ।
3. 'निष्ठायां सेटि' (6-4 52) इति णिलोपः ।
4. 'णेरनिटि' (6-4-51) इति णिलोपः ।
5. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः ।
6. 'कृतिशृभ्योः कूः' (द. उ. 1-174) इत्यत्र बाहुलकादस्मादपि धातोः कूप्रत्यये कुहूः='—सा नष्टेन्दुकला कुहूः ।' इत्यमरः । 'कुहूः स्त्री कोकिलालापनष्टेन्दुकलदर्शयोः ।' इति अमरसुधायाम् ।

(238) "कूङ् शब्दे" (VI-तुदादिः-1401. अक.सेट्. आत्म.) कुटादिः । [अ]

'अव्यक्तशब्दे कवते, कुवते त्वार्तशब्दने । कौतीति शब्दमात्रे स्यात्–' (श्लो-23) इति देवः ।

| | | | |
|---|---|---|---|
| कावकः-विका, | कावकः-विका, | [1]चूकूषकः-षिका, | चोकूयकः-यिका ; |
| [2]कुविता-त्री, | कावयिता-त्री, | चुकूषिता-त्री, | चोकूयिता-त्री ; |
| — | कावयन्-न्ती, | कावयिष्यन्-न्ती-ती ; | — |
| [3]कुवमानः,[A] | कावयमानः, | चुकूषमाणः, | चोकूयमानः ; |
| कुविष्यमाणः, | कावयिष्यमाणः, | चुकूषिष्यमाणः, | [4]चुकावयिषिष्यमाणः, चोकूयिष्यमाणः ; |
| [5]कूः-कुवौ-कुवः ; | — | — | — |

[A]आकूतम्-[6]कूतम्-तः, कावितम्, चुकूषितः, चुकावयिषितः, चोकूयितः-तवान् ;

| | | | |
|---|---|---|---|
| कुवः, [7]कुवनः, | कावः, | चुकूषुः, चुकावयिषुः, | चोकुवः ; |
| कुवितव्यम्, | कावयितव्यम्, | चुकूषितव्यम्, | चोकूयितव्यम् ; |
| कुवनीयम्, | कावनीयम्, | चुकूषणीयम्, | चोकूयनीयम् ; |
| [8]कूयम्, [9]अवश्यकाव्यम्, काव्यम्, | | चुकूष्यम्, | चोकूय्यम् ; |
| ईषत्कुवः-दुष्कुवः-सुकुवः ; | | — | — |

---

[अ] 'कुङ् शब्दे' (199) इति धातोः कैयटहरदत्तादिमतानुसारेण पाठभेदोऽयम् ।

1. 'इको झल्' (1-2-9) इति सनः कित्त्वम् । 'सनि ग्रहगुहोश्च' (7-2-12) इति इण्णिषेधः ।
2. 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' (1-2-1) इति ङित्वाद्गुणाभावः । 'अचि श्नु—' (6-4-77) इत्युवङ् ।
3. 'तुदादिभ्यः शः' (3-1-77) इति शः । शस्य ङित्त्वादगुणस्योवङ् ।
4. णिच्यच आदेशो न स्यात् 'द्वित्वे कर्तव्ये—'पुयण्जि–' इति ज्ञापकात् ; तस्मादभ्यासे उकारश्रवणम् ।
5. प्रथमैकवचने सुप्रत्ययस्य रुत्वे विसर्गः ।
6. 'श्र्युकः किति' (7-2-11) इतीण्णिषेधः । एवं क्त्वायामपि । क्तिन्यप्येवमेव ।
7. 'चलनशब्दार्थादकर्मकाद्युच्' (3-2-148) इति ताच्छीलिको युच् ।
8. कुटादित्वप्रयुक्तङिद्भावाद्गुणो न ।
9. 'ओरावश्यके' (3-1-125) इति ण्यत् ।

A. 'नूत्ना हि भयधूतविह्वलवशोऽकं तदा तद्गुण-
स्फोटं कुवमानतेऽक्षि दर्शितं मोजेश्वराकूतयत् ॥' धा. का. 2-62.

| | | | |
|---|---|---|---|
| कूयमानः, | काव्यमानः, चुकूष्यमाणः, | | चोकूय्यमानः ; |
| [1]कुवः, कावः, | चुकूषः, | चुकावयिषः, | चोकुयः ; |
| कुवितुम्, | कावयितुम्, चुकूषितुम्, | | चोकूयितुम् ; |
| आकूतिः, | कावना, | चुकूषा, चुकावयिषा, | चोकूया ; |
| कुवनम्, | कावनम्, | चुकूषणम्, | चोकूयनम् ; |
| कूत्वा, | कावयित्वा, चुकूषित्वा, | | चोकूयित्वा ; |
| प्रकूय, | प्रकाव्य, | प्रचुकूष्य, | प्रचोकूय्य ; |
| कावम् २, } कूत्वा २, } | कावम् २, } कावयित्वा २, } | चुकूषम् २, } चुकूषित्वा २, } | चोकूयम् २ ; } चोकूयित्वा २. } |

(239) " कूज अव्यक्ते शब्दे " (I-भ्वादिः-223. अक. सेट्. पर.)

| | | | |
|---|---|---|---|
| कूजकः-जिका, | कूजकः-जिका, | चुकूजिषकः-षिका, | चोकूजकः-जिका ; |
| कूजिता-त्री, | कूजयिता-त्री, | चुकूजिषिता-त्री, | चोकूजिता-त्री ; |
| [A]कूजन्-न्ती, | कूजयन्-न्ती, | चुकूजिषन्-न्ती ; | — |
| कूजिष्यन्-न्ती-ती, | कूजयिष्यन्-न्ती-ती, | चुकूजिषिष्यन्-न्ती-ती ; | — |
| [2]व्यतिकूजमानः, | कूजयमानः, | — | चोकूज्यमानः ; |
| व्यतिकूजिष्यमाणः, | कूजयिष्यमाणः, | — | चोकूजिष्यमाणः ; |
| [3]कूक्-कूग्, कूजौ कूजः ; | | — | — |
| कूजितम्-तः, | कूजितः, | चुकूजिषितः, | चोकूजितः-तवान् ; |
| कूजः, [4]कूजनः, | कूजः, | चुकूजिषुः, | चोकूजः ; |
| कूजितव्यम्, | कूजयितव्यम्, | चुकूजिषितव्यम्, | चोकूजितव्यम् ; |
| कूजनीयम्, | कूजनीयम्, | चुकूजिषणीयम्, | चोकूजनीयम् ; |
| [5]कूज्यम्, | कूज्यम्, | चुकूजिष्यम्, | चोकूज्यम् ; |
| ईषत्कूजः-दुष्कूजः-सुकूजः ; | | — | — |

1. 'ऋदोरप्' (3-3-57) इत्यप् भावे ।
2. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति आत्मनेपदम् । तेन शानच् ।
3. 'चोः कुः' (8-2-30) इति पदान्ते कुत्वम् ।
4. 'चलनशब्दार्थादकर्मकाद्युच्' (3-2-148) इति ताच्छीलिको युच् ।
5. निष्ठायां सेट्त्वात् कुत्वं न ।
A. 'प्रभञ्ज्य मोदं स दृष्ट्वा वदनं ध्वजोद्गतिध्वजितकूजद्दण्डजम् ।' धा. का 1-30.

कूटयितुम्, चुकूटयिषितुम्;
कूटना, चुकूटयिषा;
कूटनम्, चुकूटयिषणम्;
कूटयित्वा, चुकूटयिषित्वा;
सङ्कूट्य, सञ्चुकूटयिष्य,
कूटम् २, } चुकूटयिषम् २; }
कूटयित्वा २, } चुकूटयिषित्वा २. }

(241) "कूट परितापे" (X-चुरादिः-1891. अक. सेट्-उभ.)
'कूड' इति हरदत्तः। 'परिदाहे—' इत्यन्ये। अदन्तः कथादिः।
'कूटयेतामसादे णौ, कूटेर्दाहे तु कूटयेत्।' (श्लो-75) इति देवः।
कूटयन्-न्ती, चुकूटयिषन्-न्ती, कूटयिष्यन्-न्ती-ती,
चुकूटयिषिष्यन्-न्ती-ती, इति शतृप्रत्यययोऽधिकोऽत्रेति विशेषः।
अन्यानि सर्वाण्यपि रूपाणि पूर्वलिखित (240) चौरादिककूटयतिवज्ज्ञेयानि।

*संकूटिने वर्तते। समन्ताद् दाह इत्यर्थः। 'अभिविधौ भाव इनुण्'* (3-3-44) इति इनुणि, इनुणन्तात् 'अण् इनुणः' (5-4-15) इति अण् तद्धितप्रत्ययः। आदिवृद्धिः। 'सङ्कूटनम् इत्यपि स्युटा समावेश इष्यते, 'भावे' इति वर्तमाने पुनर्भावग्रहणात्।' इति भाष्यम्। इनुणन्तः स्वभावात् नपुंसके वर्तते इति काशिका।

(242) "कूण सङ्कोचे" (X-चुरादिः-1689. सक. सेट्. आत्म.) आकुस्मीयः।
*कूणकः-णिका, चुकूणयिषकः-षिका, इत्यादीनि सर्वाण्यपि रूपाणि*
'कूट आप्रदाने' (240) इति धातुवत् ज्ञेयानि।

(243) "कूण सङ्कोचने" (X-चुरादिः-1896-अक. सेट् उभ.)
कूणयन्-न्ती, कूणयिष्यन्-न्ती-ती, चुकूणयिषन्-न्ती-ती, चुकूणयिषिष्यन्-न्ती-ती, इति शतृप्रत्यययोऽधिकोऽत्रेति विशेषः। अन्यानि सर्वाण्यपि रूपाणि 'कूट आप्रदाने' (240) इति चौरादिकधातुवज्ज्ञेयानि।

(244) "कूल आवरणे" (I-भ्वादिः-525. सक. सेट्. पर.)
कूलकः-लिका, कूलकः-लिका, चुकूलिषकः-षिका, चोकूलकः-लिका;

| | | | |
|---|---|---|---|
| कूलिता-त्री | कूलयिता त्री, | चुकूलिषिता-त्री, | चोकूलिता-त्री ; |
| कूलन्-न्ती, | कूलयन्-न्ती, | चुकूलिषन्-न्ती ; | — |
| कूलिष्यन्-न्ती-ती, | कूलयिष्यन्-न्ती-ती, | चुकूलिषिष्यन्-न्ती ती ; | — |
| [1]व्यतिकूलमानः, | कूलयमानः, | — | चोकूल्यमानः ; |
| व्यतिकूलिष्यमाणः, | कूलयिष्यमाणः, | — | चोकूलिष्यमाणः ; |
| कूल्-कूलौ-कूलः ; | — | — | — |
| कूलितम्-तः, | कूलितः, | चुकूलिषितः, | चोकूलितः-तवान् ; |
| [2]कूलः, [3]सन्मार्गसङ्कूली,[^] | कूलः, | चुकूलिषुः, | चोकूलः ; |
| कूलितव्यम्, | कूलयितव्यम्, | चुकूलिषितव्यम्, | चोकूलितव्यम् ; |
| कूलनीयम्, | कूलनीयम्, | चुकूलिषणीयम्, | चोकूलनीयम् ; |
| कूल्यम्, | अनुकूल्यम्, | चुकूलिष्यम्, | चोकूल्यम् ; |
| ईषत्कूलः-दुष्कूलः-सुकूलः ; | | — | — |
| कूल्यमानः, | कूल्यमानः, | चुकूलिष्यमाणः, | चोकूल्यमानः ; |
| कूलः, [4] कुकूलम्, (तुषाग्निः) | कूलः, | चुकूलिषः, | चोकूलः ; |
| कूलितुम्, | कूलयितुम्, | चुकूलिषितुम्, | चोकूलितुम् ; |
| कूला, | कूलना, | चुकूलिषा, | चोकूला ; |
| कूलनम्, | कूलनम्, | चुकूलिषणम्, | चोकूलनम् ; |
| कूलित्वा, | कूलयित्वा, | चुकूलिषित्वा, | चोकूलित्वा ; |
| अनुकूल्य, | प्रतिकूल्य, | सञ्चुकूलिष्य, | प्रचोकूल्य ; |
| कूलम् २, कूलित्वा २, | कूलम् २, कूलयित्वा २, | चुकूलिषम् २, चुकूलिषित्वा २, | चोकूलम् २ ; चोकूलित्वा २. |

1. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति आत्मनेपदम्। शानच्।
2. 'इगुपधज्ञा—' (3-1-135) इति कर्तरि कः। यद्वा 'हलश्च' (3-3-121) इति संज्ञायां घञ्।
3. 'सुप्यजातौ णिनिस्ताच्छील्ये' (3-2-78) इति णिनिः।
4. 'कुस्वादीनां [illegible] च' (वा. 6-1-12) इति वार्तिके चकारात् घञर्थे कप्रत्यये, द्वित्वे च रूपम्। कुकूलम् = तुषाग्निः। —इति क्षीरतरङ्गिणी।

^. 'सन्मार्गसङ्कूलिषु खलदायिनं दहन्तमेनाधि च तत्पूलवत्।' धा. का. 1-68.

(245) "कृञ् हिंसायाम्" (V-स्वादिः-1253. सक. अनि. उभ.)

'हिंसाकरणयोः श्चावौ कृणोति कृणुते कृञः ।
करोति कुरुते द्वे द्वे सम्पद्येते पदे क्रमात् ॥' (श्लो-31) इति देवः ।

कारकः-रिका, कारकः-रिका, [1]चिकीर्षकः-र्षिका, [2]चेक्रीयकः-यिका ;
कर्ता-त्री, कारयिता-त्री, चिकीर्षिता-त्री, चेक्रीयिता-त्री ;
[3]कृण्वन्-ती, कारयन्-न्ती, चिकीर्षन्-न्ती ; —
[4]करिष्यन्-न्ती-ती, कारयिष्यन्-न्ती-ती, चिकीर्षिष्यन्-न्ती-ती ; —
कृण्वानः, कारयमाणः, चिकीर्षमाणः, चेक्रीयमाणः ;
करिष्यमाणः, कारयिष्यमाणः, चिकीर्षिष्यमाणः, चेक्रीयिष्यमाणः ;
[5]कृत्-कृतौ-कृतः ; — — —
[A]कृतम्-तः-तवान्, कारितः, चिकीर्षितः, चेक्रीयितः-तवान् ;
करः, कारः, चिकीर्षुः, चेक्रियः ;
कर्तव्यम्, कारयितव्यम्, चिकीर्षितव्यम्, चेक्रीयितव्यम् ;
करणीयम्, कारणीयम्, चिकीर्षणीयम्, चेक्रीयणीयम् ;
कार्यम्, कार्यम्, चिकीर्ष्यम्, चेक्रीय्यम् ;
ईषत्करः-दुष्करः-सुकरः ; — —
[6]क्रियमाणः, कार्यमाणः, चिकीर्ष्यमाणः, चेक्रीय्यमाणः ;
कारः, कारः, चिकीर्षः, चेक्रीयः ;
कर्तुम्, कारयितुम्, चिकीर्षितुम्, चेक्रीयितुम् ;
कृतिः, [7]कारा, कारणा, चिकीर्षा, चेक्रिया ;

---

1. 'इको झल्' (1-2-9) इति कित्वम् । 'अज्झनगमां सनि' (6-4-16) इति दीर्घः । 'ऋत इद्धातोः' (7-1-100) इतीत्वम् । रपरत्वम् ।
2. 'रीगृतः' (7-4-27) इति रीङ् । गुणोऽभ्यासस्य ।
3. 'स्वादिभ्यः श्नुः' (3-1-73) इति श्नुः विकरणप्रत्ययः । 'हुश्नुवोः सार्वधातुके' (6-4-87) इति यण् । णत्वम् ।
4. 'ऋद्धनोः स्ये' (7-2-70) इतीट् ।
5. 'ह्रस्वस्य पिति कृति तुक्' (6-1-71) इति तुक् ।
6. 'रिङ् शयग्लिङ्क्षु' (7-4-28) इति रिङ् ।
7. 'कारा बन्धने' (ग. सू. 3-3-104) इति भिदादिपाठादङ् ।
A. 'कुब्जा कृतारिबलमेषन कृण्वती सा
पार्श्वं समीयुनसौरभपूरकृष्णम् ॥' धा. का. 2-68.

| | | | |
|---|---|---|---|
| करणम्, | कारणम्, | चिकीर्षणम्, | चेक्रीयणम्; |
| कृत्वा, | कारयित्वा, | चिकीर्षित्वा, | चेक्रीयित्वा; |
| विकृत्य, | विकार्य, | प्रचिकीर्ष्य, | प्रचेक्रीय्य; |
| कारम् २, कृत्वा २, | कारम् २, कारयित्वा २, | चिकीर्षम् २, चिकीर्षित्वा २, | चेक्रीयम् २; चेक्रीयित्वा २. |

(246) "डु कृञ् करणे" (VIII-तनादिः-1472-सक. अनि. उभ.)

'हिंसाकरणयोः श्नावौ कृणोति कृणुते कृञः ।
करोति कुरुते द्वे द्वे सम्पद्येते पदे क्रमात् ॥' (श्लो-31) इति देवः ।

अयं धातुः भ्वादिगणेऽपि पठ्यते । तेन करति, करते इति रूपद्वयमपि साधु—इति क्षीरस्वामी मन्यते । अत एव, कस्याचिदुणादिवृत्तौ 'करति, कृणोति, करोतीति वा कारुः' इति कारुशब्दव्युत्पादनं कृतं सङ्गच्छते । पुरुषकारोऽप्यस्यानुकूलः । अन्ये तु बहवः भ्वादिपाठं नाभ्युपगच्छन्ति । अत एव, न्यासग्रन्थे 'कः करत्करति—' (8-3-50) इत्यत्र, 'करतिरिति छान्दसत्वात् व्यत्ययेन शप् ।' इति प्रोक्तम् । यदि भ्वादिपाठोऽभिमतः स्यात्, तदा शपो व्यत्ययकल्पनमसङ्गतं भवेत् । अत एव, देवः श्नुप्रत्यये, उप्रत्यये च साधुत्वमभ्युपैति ।

| | | | |
|---|---|---|---|
| कारकः-रिका, | कारकः-रिका, | [1]चिकीर्षकः-र्षिका, | [2]चेक्रीयकः-यिका; |
| कर्ता-त्री, | कारयिता-त्री, | चिकीर्षिता-त्री, | चेक्रीयिता-त्री; |
| [3]कुर्वन्, | [A]उपकुर्वन्, | (विवं)[4] विकुर्वन्, | [5]अनुकुर्वन्, |

1. 'अज्झनगमां सनि' (6-4-16) इति दीर्घे, 'इको झल्' (1-2-9) इति सनः कित्वे, 'ऋत इद् धातोः' (7-1-100) इति इत्वे रपरत्वे, 'सन्यङोः' (6-1-9) इति द्वित्वादिकम् ।
2. 'रिङ् शयग्लिङ्क्षु' (7-4-28) इति रिङादेशे, द्वित्वे, 'गुणो यङ्लुकोः' (7-4-82) इत्यभ्यासस्य गुणे, 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः ।
3. 'तनादिकृञ्भ्य उः' (3-1-79) इत्युप्रत्यये, गुणे, 'अत उत् सार्वधातुके' (6-4-110) इत्युत्वे, उप्रत्ययस्य यणादेशः ।
4. 'वेः शब्दकर्मणः' (1-3-34) इत्यत्र 'शब्दकर्मणः' इत्युक्तत्वादत्र न शानच् ।
5. 'अनुपराभ्यां कृञः' (1-3-79) इति शतृप्रत्ययः ।

A. 'उपकुर्वंस्तमात्मीयं प्रकुर्वाणोऽनुजीविनम् ॥' भ. का.8-18.

[1]जङ्घाकरः- [2]बाहुकरः- [3]अहस्करः- [4]धनुष्करः-अरुष्करः, [5]कर्मकरः-कर्मकारः, [6]शब्दकारः-श्लोककारः कलहकारः-गाथाकारः-[A]वैरकारः-चाटुकारः-सूत्रकारः-मन्त्रकारः पदकारः, [7]स्तम्बकरिः (व्रीहिः)-शकृत्करिः (वत्सः), स्तम्बकारः-शकृत्कारः, [8]मेघङ्करः[B]-ऋतिङ्करः-भयङ्करः, अभयङ्करः, [9]शिवङ्करः, [10]क्षेमङ्करः [C]प्रिय-

---

1. 'जङ्घाकरः' इत्यत्र जङ्घाशब्देन लक्षणया तत्साध्यवेगो लक्ष्यते।
2. 'बाहुकरः' इत्यत्र बाहुशब्देन बाहुसाध्या गतिः, प्रवृत्तिर्वा बोध्यते।
3. 'कस्कादिषु च' (8-3-48) इति सूत्रे गणपाठात् सत्वम्। तेन जिह्वामूलीयो न भवति।
4. 'धनुष्करः अरुष्करः' इत्यत्र 'नित्यं समासेऽनुत्तरपदस्थस्य' (8-3-45) इति षत्वम्।
5. 'कर्मणि भृतौ' (3-2-22) इति टः। भृतिं यः सेवते स कर्मकरः; अन्यत्र कर्मकारः।
6. 'न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु' (3-2-23) इति हेत्वादिषु प्राप्तस्य टप्रत्ययस्य निषेधात् औत्सर्गिकः अण्। एवं 'पदकार' इति पर्यन्तं ज्ञेयम्।
7. 'स्तम्बशकृतोरिन्' (3-2-24) इति इन् प्रत्ययः। 'व्रीहिवत्सयोरिति वक्तव्यम्' (वा. 3-2-24) इति वार्तिकात् स्तम्बकरिः व्रीहिः-शकृत्करिः वत्सः। अन्यत्र स्तम्बकारः शकृत्कारः इति।
8. 'मेघर्तिभयेषु कृञः' (3-2-43) इति खच्। खित्वात् 'अरुर्द्विषदजन्तस्य—' (6-3-67) इति पूर्वपदस्य मुम्। 'भयाद्यादिषु तदन्तविधिः' (भाष्यम्—(1-1-72) इति भाष्यात् 'अभयङ्करः' इत्यपि साधुः।
9. 'शिव एको ध्येयः शिवङ्करः'—इत्याथर्वणोपनिषदि श्रूयते। छान्दसत्वात् बहुलग्रहणेन खचि रूपनिष्पत्तिरिति पदमञ्जरी। 'क्षेमङ्करोऽरिष्टतातिः शिवतातिः शिवङ्करः।' इत्यभिधानरत्नमाला (2-185)।
10. 'क्षेमप्रियमद्रेऽण् च' (3-2-44) इति खजणौ।

A. 'यो वैरकारः स्वयमेव गोष्पभूत् तृणेढि नो स स्म शकृत्करीनपि।
नासीदकाण्डेऽप्यफलेप्रहिर्दुमस्तदर्थवः कर्मकरा इवाभवन्॥' धा. वि. 2-63.

B. 'मेघङ्करमिवायान्तमृक्षं रामं सलक्ष्मणम्।
दृष्ट्वा मेने न सुग्रीवो वालिमानं भयङ्करम्॥' भ. का. 6-104.

C. 'महाकुलीन ऐक्ष्वाके वंशे दाशरथिर्मम।
पितुः प्रियङ्करो भर्ता क्षेमकारस्तपस्विनाम्॥
निहन्ता वैरकाराणां सतां चाटुकरः सदा।
पार्थिवानामस्य चोक्तरन्तकरो रणे॥' भ. का. 5-77-78.

[1]कृत्यम्-[A]कार्यम्, कार्यम्, चिकीर्ष्यम्, चेक्रीय्यम्;

ईषत्करः-[B]दुष्करः-सुकरः, [2]ईषदाढ्यङ्करः-[C]दुराढ्यङ्करः-स्वाढ्यङ्करः;

[3]क्रियमाणः-संस्क्रियमाणः, कार्यमाणः, चिकीर्ष्यमाणः, चेक्रीय्यमाणः;

कारः-उपकारः-[D]अपकारः-[4]प्राकारः, [5]चक्रम्, [6]कृत्रिमम्-[E]असंस्कृत्रिमम्, कारः, चिकीर्षः, चेक्रीयः;

कर्तुम्-[F]व्याकर्तुम्,

---

1. 'विभाषा कृवृषोः' (3-1-120) इति क्यप् वा भवति। पक्षे, 'ऋहलोः—' (3-1-124) इति ण्यत्। क्यपि तुक्।

2. 'कर्तृकर्मणोश्च भूकृञोः' (3-3-125) इति खल्। 'कर्तृकर्मणोश्च्व्यर्थयोरिति वक्तव्यम्' (वा. 3-3-127) इति वार्तिकात् च्व्यर्थे। 'ईषदम्मालङ्करं पुष्पं सुपिण्डङ्करं ओदनः। दुस्त्सेनानिङ्करो भीरुः। स्विन्नाद्यङ्करमुमागमौ॥' इति प्रक्रियासर्वस्वे।

3. यकि, 'रिङ् शयग्लिङ्क्षु' (7-4-28) इति रिङादेशः। 'रीङि प्रकृते रिङादेश-विधानसामर्थ्यात् 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घो न।' इति सिद्धान्तकौमुदी।

4. 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (6-3-122) इति उपसर्गस्य दीर्घः। प्रक्रियते इति प्राकारः=सालः। कर्मणि घञ्।

5. 'घञर्थे कविधानम्—' (वा. 3-3-19) इति वार्तिकात् घञर्थे कः प्रत्ययः। 'द्वित्वप्रकरणे के कृञादीनामिति वक्तव्यम्' (वा. 6-1-12) इति द्वित्वम्। यण्।

6. 'ड्वितः क्त्रिः' (3-3-88) इति भावे क्त्रिः। 'क्त्रेर्मम्नित्यम्' (4-4-20) इति सूत्रेण, 'निर्वृत्ते—' (4-4-19) इत्यस्मिन्नर्थे मप्प्रत्ययः। 'नित्यम्' इत्युक्तेः मप्प्रत्ययान्त एव प्रयोज्यः।

A. 'धर्मकृत्यरतां नित्यम् अकृष्यफलभोजनाम्।' भ. का. 6-62.

B. 'अरण्ययाने सुकरे पिता मां प्रायुङ्क्त राज्ये बत दुष्करे त्वाम्।' भ. का. 3. 51.

C. 'ईषदाढ्यङ्करोऽप्येष न परत्राणुमक्रियः।' भ. का. 7-81.

D. 'अपकारे रतेऽप्यज्ञो विजिगीषुर्न वा भवान्॥' भ. का. 5-9.

E. 'असंस्कृत्रिमसंख्यानो अनुप्तिमफलाशिनौ।' भ. का. 4-37.

F. 'प्रत्याख्यातमीश व्याकर्तुमिति दुर्मेधसोऽप्यलम्॥' शिशुपालवधे 2-26.

—[A]कारयितुम्, चिकीर्षितुम्, चेक्रीयितुम्;
कृतिः, [1]क्रिया, कृत्या, [2]कारिः[B]-कारिका, कारणा, चिकीर्षा, चिकारयिषा, चेक्रीया;

करणम्, [3]आढ्यङ्करणम्-सुभगङ्करणम्-स्थूलङ्करणम्-पलितङ्करणम्-नग्नङ्करणम्-अन्धङ्करणम्-[C]अन्धङ्करणी, प्रियङ्करणम्, [4]उष्णङ्करणम्-भद्रङ्करणम्, [5]स्वाढ्यङ्करणम्, कारणम्, चिकीर्षणम्, चेक्रीयणम्;

कृत्वा, [6]तिरस्कृत्वा-तिरःकृत्वा, [7]उपाजेकृत्वा-अन्वाजेकृत्वा, [8]साक्षात्कृत्वा, [9]उरसिकृत्वा, मनसिकृत्वा, [10]मध्येकृत्वा-पदेकृत्वा-निवचने-

---

1. 'कृञः श च' (3-3-100) इति स्त्रियां भावादौ शप्रत्यये, रिङादेशे च क्रिया इति सिद्ध्यति। सूत्रे चकारात् क्यपि तुकि, कृत्या इत्यपि भवति।
2. 'विभाषाऽऽख्यानपरिप्रश्नयोरिञ् च' (3-3-110) इति इञ् प्रत्यये कारिः इति भवति। चकारात् ण्वुलि कारिका इति रूपमपि भवति।
3. 'आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्' (3-2-56) इति ख्युन् प्रत्ययः। खित्वान्मुम्। एवं प्रियङ्करणमिति पर्यन्तम्।
4. 'उष्णभद्रयोः करणे' (वा. 6-3-70) इति ख्युडन्ते पदे परतः, मुम्।
5. 'मयाद्यादिषु तदन्तग्रहणम्' (भाष्यम् 1-1-72) इति वचनात् तदन्तविधिः।
6. 'विभाषा कृञि' (1-4-72) इति गतिसंज्ञाविकल्पः। यदा गतिसंज्ञा, तदानीं 'तिरसोऽन्यतरस्याम्' (8-3-42) इति विसर्जनीयस्य सत्वविकल्पः। यदा गतिसंज्ञा न, तदानीं विसर्जनीयः, समासोऽपि न। एवं ल्यप्यपि।
7. 'उपाजेऽन्वाजे' (1-4-73) इति गतिसंज्ञायां समासविकल्पः। यदा समासः, तदानीं ल्यबपि।
8. 'साक्षात्प्रभृतीनि च' (1-4-74) इति गतिसंज्ञा। 'साक्षात्प्रभृतिषु च्व्यर्थवचनम्' (वा. 1-4-74) इति वचनात् च्व्यर्थे एव गतिसंज्ञा। समासे तु ल्यप्।
9. 'अनत्याधान उरसिमनसी' (1-4-75) इति गतिसंज्ञायां समासविकल्पः। एवं ल्यप्यपि। अत्याधानम् = उपश्लेषणम्। तदभावोऽनत्याधानम्।
10. 'मध्ये पदे निवचने च' (1-4-76) इति गतिसंज्ञायां समासविकल्पः। अत्रापि चकारात् 'अनत्याधाने' इत्यनुवर्तते। निवचनम् = वचनाभावः। निवचनेकृत्वा = वाचं नियम्येत्यर्थः।

A. 'ऐहिष्ट तं कारयितुं कृतात्मा क्रतुं नृपः पुत्रफलं मुनीन्द्रम्।' भ. का. 1-11.
B. 'यां कारिं राजपुत्रोऽयमनुतिष्ठति तां क्रियाम्।' भ. का. 7-75.
C. 'पुराऽयमेति श्रुतसम्भवस्ते कुर्वन् धियोऽन्धङ्करणीं दधानः।' वा. वि. 3-30.

कृत्वा [1]नीचैःकृत्वा-उच्चैःकृत्वा, [2]तिर्यक्कृत्वा, [3]मुखतःकृत्वा, [4]नानाकृत्वा-विनाकृत्वा-द्विधाकृत्वा-द्वैधंकृत्वा-द्वेधाकृत्वा, कारयित्वा, चिकीर्षित्वा, चेकीयित्वा ;

उपकृत्य, नीचैःकृत्य-उच्चैःकृत्य, तिर्यक्कृत्य, [A]गलतःकृत्य, नानाकृत्य-विनाकृत्य-द्विधाकृत्य-द्वैधंकृत्य-द्वेधाकृत्य, [5]कारिकाकृत्य, [6]ऊरीकृत्य-उररीकृत्य-शुक्लीकृत्य-पटपटकृत्य-पटपटाकृत्य, [7]खाट्कृत्य, [8]सत्कृत्य-असत्कृत्य, [9]अलङ्कृत्य, [10]पुरस्कृत्य, नमस्कृत्य [11]हस्तेकृत्य[B]-पाणौकृत्य,

---

1. 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' (3-4-59) इति क्त्वाणमुलौ। 'तृतीयाप्रभृतीन्यन्यतरस्याम्' (2-2-21) इति समासविकल्पः। ततश्च ल्यबपि। **अयथाभिप्रेताख्यानं** नाम=अप्रियस्योच्चैः, प्रियस्य च नीचैः कथनम्।
2. 'तिर्यच्यपवर्गे' (3-4-60) इति कृञः क्त्वाणमुलौ। **अपवर्गः**=समाप्तिः। ल्यबप्येवम्।
3. 'स्वाङ्गे तस्प्रत्यये कृभ्वोः' (3-4-61) इति कृञः क्त्वाणमुलौ, ल्यबपि। सूत्रे यथासंख्यं नेष्यते।
4. 'नाधार्थप्रत्यये च्व्यर्थे' (3-4-62) इति कृञः क्त्वाणमुलौ, ल्यबपि। धार्थत्वेन 'द्वित्र्योश्च-' (5-3-45) इति धमुञः, 'एधाच्च' (5-3-46) इति एधाचश्च ग्रहणम्।
5. 'कारिकाशब्दस्योपसंख्यानम्—' (वा. 1-4-60) इति गतिसंज्ञायां समासे ल्यप्।
6. 'ऊर्यादिच्विडाचश्च' (1-4-61) इति, **ऊरी उररी** इत्यादीनां गतिसंज्ञायां, 'कुगतिप्रादयः' (2-2-18) इति समासे, ल्यप्। तुक्। **ऊरी उररी** शब्दौ, अङ्गीकरणे, विस्तारे च वर्तेते। शुक्लीकृत्येत्येतत् च्विप्रत्ययान्तस्य, **पटपटाकृत्ये**त्येतत् डाजन्तस्य चोदाहरणम्। 'डाचि बहुलं द्वे भवतः—' (वा. 8-1-12) इति डाजन्ते द्वित्वम्।
7. 'अनुकरणं चानितिपरम्' (1-4-62) इति गतिसंज्ञायां समासे ल्यपि रूपम्।
8. 'आदरानादरयोः सदसती' (1-4-63) इति गतिसंज्ञायां समासे ल्यपि रूपम्। प्रीत्यतिशयः=**आदरः**। परिभवः, औदासीन्यं वा **अनादरः**।
9. अनेकार्थकस्यालंशब्दस्य 'भूषणेऽलम्' (1-4-64) इति भूषणेऽर्थे गतिसंज्ञायां समासे ल्यप्।
10. 'पुरोऽव्ययम्' (1-4-67) इति गतिसंज्ञायां, 'नमस्पुरसोर्गत्योः' (8-3-40) इति विसर्जनीयस्य सत्वे च रूपम्।
11. 'नित्यं हस्ते पाणावुपयमने' (1-4-77) इति नित्यं गतिसंज्ञायां समासे ल्यप्। **उपयमनम्**=दारकर्म।

A. 'सा माला **करतःकारं** मुखतोभावमागता।
तां पत्युर्**गलतःकृत्य** पार्श्वतोभूय च स्थिता॥' इति **प्रक्रियासर्वस्वे**।

B. 'ध्रियमाणाश्रवे लोला तां **हस्तेकृत्य** मा श्वसीः॥' भ. का. 5-16.

[1]प्राध्वंकृत्य, [2]जीविकाकृत्य-उपनिषत्कृत्य, तिरस्कृत्य-तिरःकृत्य, उपाजे-कृत्य-अन्वाजेकृत्य, [A]साक्षात्कृत्य, उरसिकृत्य-मनसिकृत्य, मध्येकृत्य-पदेकृत्य-निवचनेकृत्य, [3]लवणङ्कृत्य, विकार्य, प्रचिकीर्ष्य, प्रचेकीर्य;

[4B]भीतङ्कारं-[C]चोरङ्कारं (आक्रोशति), [5]स्वादुङ्कारं[D] (भुङ्क्ते), सम्पन्नङ्कारम्-लवणङ्कारम्, [6]अन्यथाकारं-एवङ्कारं-[E]कथङ्कारं-इत्थङ्कारं (भुङ्क्ते), [7]यथाकारं[F] (अहं भोक्ष्ये) तथाकारं (भोक्ष्ये, किं तवानेन !), [8]अकृतकारं (करोति), नीचैःकारं-[G]उच्चैःकारं, तिर्यक्कारम्, करतः-

---

1. 'प्राध्वं बन्धने' (1-4 78) इति नित्यं गतिसंज्ञायां समासे ल्यप्। प्राध्वंकृत्य= बन्धनेनानुकूलं कृत्वेत्यर्थः।
2. 'जीविकोपनिषदावौपम्ये' (1-4-79) इति नित्यगतिसंज्ञायां समासे ल्यप्।
3. साक्षात्प्रभृतिषु (1-4-74) लवणशब्दस्य गतिसंज्ञासन्नियोगेन मान्तत्वं निपात्यते, तेन लवणंकृत्येति भवति।
4. 'कर्मण्याक्रोशे कृञः खमुञ्' (3-4-25) इति खमुञ् खित्वात् पूर्वपदस्य मुम्।
5. 'स्वादुमि णमुल्' (3-4-26) इति णमुल्। 'स्वादुमि' इति स्वादुपर्यायाणामपि ग्रहणम्; तेन लवणङ्कारं, सम्पन्नङ्कारम् इत्यपि सिध्यति। उपपदस्य मान्तत्वं निपातनात्।
6. 'अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्' (3-4-27) इति णमुल्। अन्यथा भुङ्क्ते इत्यर्थः।
7. 'यथातथयोरसूयाप्रतिवचने' (3-4-28) इति णमुल्।
8. 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' (3-4-36) इति णमुल्। 'कषादिषु यथाविध्यनुप्रयोगः' (3-4-46) इत्यनुप्रयोगः।

A. 'साक्षात्कृत्याभिमन्येऽहं त्वां हरन्तीं श्रियं श्रियः॥' भ. का. 5-71.
B. 'तं भीतङ्कारमाक्रुश्य रावणः प्रत्यभाषत।' भ. का. 6-39.
C. 'भुजविटपमदेन श्यर्थमन्धम्भविष्णुः धिगपसरसि चोरङ्कारमाक्रुश्यमानः। त्वदुरसि विदधातु स्वामपस्कारकेलिं कुटिलकरजकोटिक्रूरकर्मा जटायुः॥' अनर्घराघवे 5.11.
D. 'स्वादुङ्कारं कालखण्डोपदंशं क्रोष्टा डिम्भं व्यध्वनत् व्यस्वनच्च॥' शिशुपालवधे-18-77.
E. 'अहत्वा हेलया पादम् उच्चैर्मूर्धसु विद्विषाम्। कथङ्कारमनालम्बा कीर्तिर्द्यामधिरोहति॥' शिशुपालवधे 2-52.
F. 'किं त्वमेवं ब्रवीषीति पृष्टोऽन्यो वक्त्यमर्षतः। यथाकारमहं जाने तथाकारं वदाम्यहम्॥' इति प्रक्रियासर्वस्वे।
G. 'समूलकाषं चकृषु रदन्तो रामानिकं दृंहितमन्युवेगाः। आवेदयन्तः क्षितिपालमुच्चैःकारं मृगं रामशिरो रुरोद॥' भ. का. 3-49.

कारम्, मुखतःकारम्, नानाकारं-विनाकारं-द्विधाकारं-द्वैधंकारं-द्वेधाकारम्;

| | | | |
|---|---|---|---|
| कारम् २, कृत्वा २, | कारम् २, कारयित्वा २, | चिकीर्षम् २, चिकीर्षित्वा २, | चेकीयम् २; चेकीयित्वा २; |

[1]कारुः, [2]क्रतुः, [3]करेणुः, [4]कर्म.

(247) "क्रुड घनत्वे" (VI-तुदादिः-1382.अक. सेट्. पर. कुटादिः।)

'घसने'—इत्येके। घनत्वम्=सान्द्रता।

| | | | |
|---|---|---|---|
| क्रोडकः-डिका, | क्रोडकः-डिका, | [5]चिक्रुडिषकः-षिका, | [6]चरीक्रुडकः-डिका; |
| क्रुडिता-त्री, | क्रोडयिता-त्री | चिक्रुडिषिता-त्री, | चरीक्रुडिता-त्री; |
| क्रुडन्-न्ती-ती, | क्रोडयन्-न्ती, | चिक्रुडिषन्-न्ती; | — |
| क्रुडिष्यन्-न्ती-ती, | क्रोडयिष्यन्-न्ती-ती, | चिक्रुडिषिष्यन्-न्ती-ती; | — |
| [7]व्यतिक्रुडमानः, | क्रोडयमानः, | — | चरीक्रुड्यमानः; |
| व्यतिक्रुडिष्यमाणः, | क्रोडयिष्यमाणः, | — | चरीक्रुडिष्यमाणः; |
| क्रुट्-क्रुड्-क्रुडौ-क्रुडः; | — | — | — |
| क्रुडितम्-तः, | क्रोडितः, | चिक्रुडिषितः, | चरीक्रुडितः-तवान्; |
| [8]क्रुडः,[A] | क्रोडः, चिक्रुडिषुः, | चिक्रोडयिषुः, | चरीक्रुडः; |
| क्रुडितव्यम्, | क्रोडयितव्यम्, | चिक्रुडिषितव्यम्, | चरीक्रुडितव्यम्; |
| क्रुडनीयम्, | क्रोडनीयम्, | चिक्रुडिषणीयम्, | चरीक्रुडनीयम्, |

---

1. करोतीति कारुः=शिल्पी। औणादिके [द. उ. 1-86] उण् प्रत्यये रूपम्।
2. क्रियतेऽसौ धर्मार्थिभिरिति क्रतुः=यज्ञः। औणादिकः [द. उ. 1-130] कतुः प्रत्ययः।
3. 'कृहृभ्यामेणुः' [द. उ. 1-133] इति एणुः प्रत्ययः। करेणुः=इभी। 'के=मस्तके रेणुर्यस्य करेणुः' इति व्युत्पत्त्याऽपि साधयन्ति।
4. 'मनिन्' [द. उ. 6-73] इति मनिनि रूपम्। क्रियते यत् फलार्थिभिस्तत् कर्म।
5. 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' (1-2-1) इति ञ्णिद्भिन्नस्य प्रत्ययस्य ङिद्वद्भावातिदेशात् लघूपधगुणो न।
6. 'रीगृदुपधस्य च' (7-4 90) इत्यभ्यासस्य रीगागमः।
7. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच्।
8. 'इगुपधज्ञा—' (3-1-135) इति कर्तरि कप्रत्ययः।
A. 'चोडचोऽयं चुडतेति केऽपि, जुडतेत्यन्ये कडन्तोऽलुठन् देवे दुर्ग्रहिणे क्रुडतिरपि कुडन्नागत्ये पुडित्वाऽऽदरम्।' धा का. 2-81.

[1]कूडयम्, कर्डयम्, चिकूडिष्यम्, चरीकूडयम्;
ईषत्कूडः-दुष्कूडः-सुकूडः; — —
कूडयमानः, कर्डयमानः, चिकूडिष्यमाणः, चरीकूडयमानः;
कर्डः, कर्डः, चिकूडिषः, चरीकूडः;
कूडितुम्, कर्डयितुम्, चिकूडिषितुम्, चरीकूडितुम्;
[2]कूडिः, कर्डना, चिकूडिषा, चरीकूडा;
कूडनम्, कर्डनम्, चिकूडिषणम्, चरीकूडनम्;
कूडित्वा, कर्डयित्वा, चिकूडिषित्वा, चरीकूडित्वा;
विकूडय, विकर्ड्य, विचिकूडिष्य, प्रचरीकूडय;
कर्डम् २, } कर्डम् २, } चिकूडिषम् २, } चरीकूडम् २; }
कूडित्वा २,} कर्डयित्वा २,} चिकूडिषित्वा २,} चरीकूडित्वा २.}

(248) "कृती छेदने" (VI-तुदादिः-1435. सक. सेट्. पर.) मुचादिः।

'कृणत्ति कृन्ततीत्येते वेष्टने च्छेदने क्रमात्।
कीर्तयेदिति संशब्दे—' (श्लो-95) इति देवः।

कर्तकः-र्तिका, कर्तकः-र्तिका, [3]चिकृत्सकः-[4]चिकर्तिषकः, [5]चरीकृतकः-तिका;
कर्तिता-त्री, कर्तयिता-त्री, चिकृत्सिता-त्री, चिकर्तिषिता-त्री, चरीकृतिता-त्री;
[6]कृन्तन्[A]-[7]न्ती-ती, कर्तयन्-न्ती, चिकृत्सन्-चिकर्तिषन्-न्ती; —
[8]कर्तिष्यन्[B]-कर्त्स्यन् न्ती-ती, कर्तयिष्यन्-न्ती-ती, चिकृत्सिष्यन्-चिकर्तिषिष्यन्-न्ती-ती;

---

1. 'ऋदुपधाच्चाक्लृपिचृतेः' (3-1-110) इति क्यप्।
2. 'तितुत्र—' (7-2-9) इति इडभावे क्तिनि कुत्वे च रूपम्।
3. 'हलन्ताच्च' (1-2-10) इति सनः कित्त्वाद्गुणाभावः।
4. 'सेऽसिचि कृतचृतच्छृदतृदनृतः' (7-2-57) इति सनः इड्विकल्पः। इटि गुणः।
5. 'रीगृदुपधस्य च' (7-4-90) इत्यभ्यासस्य रीगागमः।
6. 'शे मुचादीनाम्' (7-1-59) इति नुम्।
7. 'आच्छीनद्योर्नुम्' (7-1-80) इति नुम् वा।
8. 'सेऽसिचि–' (7-2-57) इति सादेरार्धधातुकस्य इड् वा।
A. 'भुक्त्वा गोरसमिक्षमजमजितः कंसस्य कृन्तन् मुदं
तं खेरयन् रिरिताद्यदारुपमसौ मोदेन निन्ये निशाम्॥' धा. का. 2-84.
B. 'वने चचार कर्तिष्यन् नारम्भेंचित्र निरङ्कुशः॥' ग. का. 9-12.

[1]व्यतिकृन्तमानः, कर्तयमानः, — चरीकृत्यमानः;
व्यतिकर्तिष्यमाणः-व्यतिकर्त्स्यमानः, कर्तयिष्यमाणः, [2]चरीकृतिष्यमाणः ;
काष्ठकृत्-कृतौ-कृतः ; — — —
[3]कृत्तम्[A]-त्तः, कर्तितः, चिकृत्सितः-चिकर्तिषितः, चरीकृतितः-तवान् ;
[4]कृतः, [5]विकर्तनः, कर्तः, चिकृत्सुः-चिकर्तिषुः, चरीकृतः ;
कर्तितव्यम्, कर्तयितव्यम्, चिकृत्सितव्यम्-चिकर्तिषितव्यम्, चरीकृतितव्यम्;
कर्तनीयम्, कर्तनीयम्, चिकृत्सनीयम्-चिकर्तिषणीयम्, चरीकृतनीयम् ;
[6]कृत्यम्, कर्त्यम्, चिकृत्स्यम्-चिकर्तिष्यम्, चरीकृत्यम्;
ईषत्कर्तः-दुष्कर्तः-सुकर्तः ; — — —
कृत्यमानः, कर्त्यमानः, चिकृत्स्यमानः-चिकर्तिष्यमाणः, चरीकृत्यमानः ;
कर्तः, कर्तः, चिकृत्सः-चिकर्तिषः, चरीकृतः ;
कर्तितुम्, कर्तयितुम्, चिकृत्सितुम्-चिकर्तिषितुम्, चरीकृतितुम् ;
कृतिः, कर्तना-चिकृत्सा, चिकर्तिषा- चरीकृता ;
कर्तनम्, कर्तनम्, चिकृत्सनम्-चिकर्तिषणम्, चरीकृतनम् ;
[7]कर्तित्वा, कर्तयित्वा, चिकृत्सित्वा-चिकर्तिषित्वा, चरीकृतित्वा ;
विकृत्य, विकर्त्य, विचिकृत्स्य-विचिकर्तिष्य, प्रचरीकृत्य ; —
कर्तम् २, कर्तित्वा २, } कर्तम् २, कर्तयित्वा २; } चिकृत्सम् २, चिकृत्सित्वा २, चिकर्तिषम् २, चिकर्तिषित्वा २, } चरीकृतम् २; चरीकृतित्वा २. }

---

1. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच् ।
2. यङः, अल्लोपस्य स्थानिवद्भावात् गुणो न ।
3. 'श्वीदितो निष्ठायाम्' (7-2-14) इति इण्णिषेधः ।
4. 'इगुपध—' (3-1-135) इति कर्तरि कः प्रत्ययः ।
5. नन्द्यादिपाठात् 'नन्दिग्रहि—' (3-1-134) इति कर्तरि ल्युः । विशेषेण कर्तयति भक्तानां रोगादिकमिति विकर्तनः=सूर्यः । 'आरोग्यं भास्करादिच्छेत्—' इति स्मरणात् ।
6. 'ऋदुपधाच्चाक्लृपि—' (3-1-110) इति क्यप् ।
7. 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधात् गुणः ।
A. 'निकृत्तमत्तद्विपकुम्भमांसैः संवृक्तमुक्तैर्हरयोऽप्रसादैः ।' भ. का. 11-42.

## (249) "कृती वेष्टने" (VII-रुधादिः-1447. सक. सेट्. पर.)

'कृणत्ति कृन्ततीत्येते वेष्टने च्छेदने क्रमात् ।
कीर्तयेदिति संशब्दे—' (श्लो. 95) इति देवः ।

कर्तकः-र्तिका, कर्तकः-र्तिका, चिकर्तिषकः-चिकर्तिषकः-षिका, चरीकृतकः-तिका ; इत्यादीनि सर्वाण्यपि रूपाणि तौदादिककृतीधातुवत् (248) ज्ञेयानि । शतरि कृन्तन्-ती, 'रुधादिभ्यः श्नम्' (3-1-78) इति श्नमि, 'श्नसोरल्लोपः' (6-4-111) इत्यल्लोपः, इति विशेषः ।

## (250) "कृप अवकल्कने" (X-चुरादिः-1749. सक. सेट्. उभ.)

अवकल्कनम्—मिश्रीकरणम् । [अ]

'कल्पते शपि सामर्थ्ये, कल्पयत्यवकल्कने ।
अदन्तस्य कृपेर्णौ तु दौर्बल्ये कृपयेदिति ॥ (श्लो. 135) इति देवः ।

| | |
|---|---|
| [1]कल्पकः-ल्पिका, | चिकल्पयिषकः-षिका ; |
| कल्पयिता-त्री, | चिकल्पयिषिता-त्री ; |
| कल्पयन्-न्ती, | चिकल्पयिषन्-न्ती ; |
| कल्पयिष्यन्-न्ती-ती, | चिकल्पयिषिष्यन्-न्ती-ती ; |
| कल्पयमानः, | चिकल्पयिषमाणः ; |
| कल्पयिष्यमाणः, | चिकल्पयिषिष्यमाणः ; |
| [2]कल्-कल्पौ-कल्पः ; | — |
| कल्पितम् तः, | चिकल्पयिषितः-तवान् ; |
| कल्पः, कल्पनः, | चिकल्पयिषुः, |
| कल्पयितव्यम् , | चिकल्पयिषितव्यम् ; |

---

1. धातोरस्य णिजन्तत्वेनानेकाच्त्वात् यङ् न । 'कृपो रो लः' (8-2-18) इति लत्वम् ।
2. पकारस्य 'संयोगान्तस्य लोपः' (8-2-23) इति लोपः । णिचः स्थानिवत्त्वं [illegible] न, 'पूर्वत्रासिद्धे न स्थानिवत्' (वा. 1-1-58) इति निषेधात् ।

[अ] 'क्षीरस्वामी तु 'कृपेस्तादर्थ्ये' (ग. सू. चुरादौ) इति पठित्वा, 'तादर्थ्ये' इति—प्रस्तुतस्य भुवोऽर्थे मिश्रीकरणे ; अथवा, तच्छब्देन कल्पिः परामृश्यते ; तस्य योऽर्थः=सामर्थ्यलक्षणः, तस्मिन्—इति द्वेधा व्याख्यत् ॥' इति प्रौढमनोरमा ।

| | |
|---|---|
| कल्पनीयम्, | चिकल्पयिषणीयम्; |
| कल्प्यम्, | चिकल्पयिष्यम्; |
| कल्प्यमानः, | चिकल्पयिष्यमाणः; |
| ईषत्कल्पः-दुष्कल्पः-सुकल्पः; | — |
| कल्पः, | चिकल्पयिषः; |
| कल्पयितुम्, | चिकल्पयिषितुम्; |
| कल्पना, | चिकल्पयिषा; |
| कल्पनम्, | चिकल्पयिषणम्; |
| कल्पयित्वा, | चिकल्पयिषित्वा; |
| प्रकल्प्य, | प्रचिकल्पयिष्य; |
| कल्पम् २, } कल्पयित्वा २, } | चिकल्पयिषम् २; } चिकल्पयिषित्वा २. } |

# शुद्धिपत्रिका

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 1 | 7 | मखिल । गम- | मखिलागम |
| ,, | 16 | कृतन्त- | कृदन्त |
| 3 | 24 | असाग्य | असग्य |
| 4 | 22 | अङ्घमानः, | अङ्घमानः |
| 5 | 8 | अङ्कमङ्कम् २- | अङ्कमङ्कम् |
| 6 | 26 | कर्मण्यणू- | कर्मण्यण् |
| 7 | 7 | अरह्वि | अरह्वि |
| ,, | 8 | सदा | तदा |
| [illegible] | 13 | वेवीयक ; | वेवीयकः ; |
| ,, | 22 | वेवीय ; | वेवीयः ; |
| ,, | 24 | (4-131) | (द. उ. 1-59) |
| ,, | 27 | पशुमात | पशुमात |
| 9 | 7 | [1]समजः, [1A]समाजः [B], | [1]समजः[B], [1A]समाजः, |
| 10 | Title | अजि | अट |
| 11 | 19 | ऽरण्यानि | ऽरण्यानी |
| ,, | 23 | 1-39-5 | 1-39. |
| ,, | 24 | (वा. 1-1-64) | (वा. 6-1-94) |
| ,, | 27 | यकिटथशब्दस्य | यकि टथशब्दस्य |
| 12 | 7 | -ती-ती ; | न्ती-ती ; |
| ,, | 28 | संयोष्टि- | संगोष्टि- |
| ,, | 29 | स्फुटद्रुमे | स्फुटद्द्रुमे |
| 13 | 5 | अट्टयित्वा | अट्टयित्वा 2 |
| 14 | 14 | ह्रिका, | ह्रिका, |
| ,, | 17 | न्ती-न्ती, | न्ती-ती, |
| ,, | 19 | अद्[A] - | अद्[C]- |
| ,, | 23 | खलैः | कलैः |
| ,, | 24 | A | C |
| 15 | 15 | प्राणते | प्राणने |
| 16 | 15 | ,, | ,, |
| 17 | 15 | ऽतति चिन्तयेत् । | ऽतति—। |
| ,, | 24 | उपघादी र्घः । | उपघादीर्घः । |
| 18 | 17 | ऽतति, चिन्तयेत् । | ऽतति—। |

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 18 | 23 | प्रस्थितं | प्रथितं |
| ,, | 28 | दशपादुणादिवृत्तौ 1-44 | दशपादुणादिषु ( 1. 44) |
| 20 | 18 | 'वाऽसरूपो—' | 'वाऽसरूपः—' |
| ,, | 22 | (2-4-64) | (वा-2.4.64) |
| 21 | Title | अदि | अन |
| ,, | 18 | हे"प्राण् ; | [हे] "प्राण् , |
| ,, | 21 | ऋषिः । | ऋषिः । |
| 24 | 22 | उभ-से.) | सक. सेट्. उभ.) |
| 25 | Title | अञ्जू | अन्जू |
| ,, | 28 | ....(6-4-111) | ...(6-4-111) इत्यकारलोपः । |
| 27 | 15 | अन्धिदयिषित्वा | अन्दिधयिषित्वा |
| 28 | Title | अभि | अभ्र |
| ,, | 27 | वभ्रद्ध्र् | वभ्रद्ध्र् |
| 29 | 23 | ...(6-4-32) | (6-4-92) |
| ,, | 27 | क्षमज्क्षेमन | क्षमक्षेमन |
| 34 | 25 | लाञ्छिताङ्गे | लञ्छिताङ्गे |
| ,, | 27 | अथार्थ्यं | अथार्थ्यं |
| 35 | 5 | से. उ. | सक. सेट्. उभ. |
| ,, | 8 | इत्यादिकानां | इत्यादिकानां रूपाणां |
| 37 | 1 | उपयाच्ञानायाम् | उपयाच्ञायाम् |
| ,, | 30 | ....नधा.... | ....वध.... |
| ,, | 31 | जिह्निया | जिह्वयां |
| 38 | [illegible] | ऽर्देयौ— | ऽर्देद् यौ |
| ,, | 25 | 'नन्दिग्रहिपचादिभ्यो–' (3-1-134) इति नन्द्यादित्वात् | नन्द्यादित्वात् (3-1-134) |
| ,, | 27 | स्वनैः | स्वरैः |
| 40 | 28 | मच्छंद | मच्छदन् |
| 41 | 11 | अर्वक A :- | Aअर्वकः— |
| ,, | 15 | पूजाजाम् | पूजायाम् |
| 42 | 2 | Aअर्हूणीयम् , | Aअर्हणीयम् , |
| 44 | 22 | ङीषु । | ङीष् । |
| 45 | 26 | ङीपि | ङीषि |
| ,, | 27 | रूद् | रूद् |
| 46 | 15 | इति श्रा- | इति श्रा |
| ,, | 17 | (6-4-111) | (6-4-112) |
| ,, | 27 | (3-54) | 9-54 |

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 46 | 28 | 'उपेयिवान्-' | 'उपेयिवाननाश्वान्' |
| 47 | 16 | 'आशितम् | आशितम्- |
| ,, | 20 | 3. इति श्नुविक- | (3-1-73) इति श्नुः विक- |
| ,, | 30 | प्रायुः | प्रापुः |
| 49 | 3 | 184 | 185 |
| 50 | 2 | गत्यादौ '.......184 | गत्यादौ,........185 |
| ,, | 20 | शानच्' । | शानच् । |
| ,, | 24 | किति ' | किति ' |
| ,, | 25 | आर्धधातुक ..... | आर्धधातुक........ |
| 51 | 7 | अनुभावयिष्य, | अनुबिभावयिष्य, |
| ,, | 13 | 184 | 185 |
| ,, | 19 | निरस्यमानः, निरस्यन्, | निरस्यमानः, |
| ,, | 24 | वहुयहेपु | वहुयहेषु |
| 53 | 26 | वष्कयतीह | वष्कयतीह |
| 56 | 2 | Aजुर्हः, इति रूपाणि । | इति रूपाणि । Aजुर्हः । |
| 57 | 16 | आञ्छिञ्छिषित्वा | आचिच्छिषित्वा |
| 59 | Title | आप्ल | आप्ल |
| 61 | 27 | 'सार्वधातुक........ | 'सार्वधातुक........ |
| 62 | 2 | ईविष्ययाणः | ईविष्यमाणः |
| ,, | 23 | (वा. 2-4-45) | (वा. 2-4-46) |
| ,, | 30 | ,, | ,, |
| 63 | 26 | ,, | ,, |
| 66 | 17 | (6-4-16) दीर्घः । | (6-4-16) इति दीर्घः । |
| 67 | 20 | इयक्षनं | इयज्वनं |
| 70 | 22 | 'सम्पदादित्वात्—' | सम्पदादित्वात्, |
| ,, | 25 | 'कृत्यच' | 'कृत्यचः' |
| ,, | 33 | आर्च्छीत् | आर्षीत् |
| 71 | 29 | चितगजेन्द्र...... | चितगजेन्द्र ....... |
| 72 | 7 | 1548 | 1448 |
| ,, | 22 | का न | कालेन |
| ,, | 28 | 'कर्मण्यण्' | 'कर्मण्यण्' |
| 73 | 11 | धातुकाव्ये | धातुकाव्ये (2-78) |
| 75 | 25 | 'कुन् शिल्पिसंज्ञयोः' | 'कुन् शिल्पिसंज्ञयोः' [द. उ. 3 5] |
| 78 | 31 | 'इयक्षनं...... | 'इयज्वनं........ |
| 83 | 27 | सुगर्दित | सुगुर्दित |

| पृष्टम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 85 | 10 | 'ईरयतीरति । | '—ईरयतीरति । |
| ,, | 18 | ईररियिष्यमाणः ; | ईरिरयिष्यमाणः ; |
| 87 | 20 | ईर्ष्यॅयिषणम् ; | ईर्ष्यिषिषणम् ; |
| ,, | 22 | समीयिप्य, | समीर्पिसुयिष्य, |
| 88 | 20 | चानश् | चानश् |
| ,, | 25 | सुस्वाय | सुखाय |
| 89 | 20 | भाष्ये । | भाष्ये (3-3-43) । |
| 90 | 26 | विश्वन् | विर्श्वं |
| 91 | 30 | ...मुद्रितं | .......मुद्रितं |
| 93 | 17 | ओकः, ओचिचिषुः, | ओचः, ओचिचिषुः, |
| ,, | 23 | ओकः, ओचिचिषः ; | ओचः, ओचिचिषः ; |
| 95 | 11 | 1254 | 1294 |
| ,, | 19 | (श्लो. 56) | (श्लो. 55-56) |
| 96 | 21 | (श्लो-53) | ,, |
| ,, | 22 | (6-3-19) | (6-4-19) |
| 97 | 1 | धातुकाव्ये । | धातुकाव्ये (1-73) । |
| 100 | 21 | उम्मितः-तम्-तवान्, | उभितः-तम्-तवान् ; |
| ,, | 26 | (द. उ. 1-197) | (द. उ. 1-97) |
| 102 | 10 | ओनिभयिषा ; | ओविभयिषा ; |
| 103 | 11 | उब्जः, समुद्रः, [1]न्युब्जः, (रोगः) | [1]न्युब्जः (रोगः), समुद्रः, उब्जः, |
| 105 | 30 | पूर्वित....... | पूर्वित....... |
| 109 | 5 | ऊः-ऊनौ- | ऊ-ऊनौ- |
| 113 | 26 | स्नुतास्त्राः | स्नुतास्राः । |
| ,, | 28 | तं प्रोर्णनूषु.... | तं प्रोर्णुनूषु....... |
| 114 | 22 | सक्थिः । | सक्थि । |
| ,, | 26 | ...मजूषकत्वं | .......मजूषकस्त्वं |
| 115 | 26 | ....ध्वस्व | .......ध्वस्व |
| 116 | 17 | (7-1-86) | (7-3-86) |
| ,, | 27 | (7-2-20) | (7-2-70) |
| 117 | 23 | (वा. 4-1-40) | (वा. 4-1-49) |
| 118 | 12 | 'तत्रेयत्पृच्छ.... | 'तत्रेयत्पृच्छ....... |
| ,, | 23 | अर्यकः | अर्भकः = |
| 119 | 10 | "स्पृच.... | "स्पृच....... |
| 121 | 20 | धातुकाव्ये । | धातुकाव्ये (1-24) । |

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 124 | 1 | "ऋणु........ | "ऋणु...... |
| ,, | 21 | ....कृम्भ्य ढ:' | ........कृम्भ्य उ:' |
| ,, | 30 | ...घृंणिमान् | .......घृंणिमान् |
| 126 | 20 | दुरूतीय:- | दुर्ऋतीय:- |
| 128 | 23 | (7-3-56) | (7-2-56) |
| ,, | 28 | ....क्षीयमानो | ....क्षीयमाणो |
| 129 | 14 | दुरूम्फ:, | दुर्ऋम्फ:, |
| 131 | 8 | तुदादि:. सक. | तुदादि:-1287. सक. |
| 132 | 16 | किद्वद्भवाच्च | किद्वद्भावाच्च |
| ,, | 30 | किति' | क्किति' |
| 133 | 27 | 'ऋल्वादिभ्य: | 'ऋल्वादिभ्य: |
| 140 | 27 | बनप्रदेशात् | बनप्रदेशान् |
| 142 | 19 | कखयिष्यमाण:, | कखयिष्यमाण:, कखित:-तवान्, |
| 146 | 12 | शोके यो | शोके यौ |
| 147 | 11 | ,, | ,, |
| 148 | 16 | शोके स्यात् | शोके यौ |
| 151 | 31 | बनात्...... | बनात् |
| 155 | 30 | धा. का. 5. 93. | धा. का. 3. 59. |
| 158 | 28 | (धातुकाव्यव्याख्याने) | (धातुकाव्यव्याख्याने 2-5.) |
| 159 | 28 | स्तमात् | स्तनान् |
| 160 | 23 | ....प्रत्ययेऽपि। | ........प्रत्ययेऽपि दीर्घः। |
| 163 | 23 | (7-3-4) | (7-3-34) |
| 164 | 32 | 'प्रधिण्य...परिघुण्य...प्रघूण्य | 'प्रधिण्ण्य...परिघुण्ण्य...प्रघूण्ण्य |
| 167 | 27 | ज्ञेयानि। | ज्ञेयानि। 'कत्र' इत्यस्य पाठभेदोऽयं धातुः। |
| 171 | 6 | कलने | कलते |
| ,, | 27 | ....मवेलयद् | ....मवेलयद् |
| ,, | 28 | शूर्पनखा.... | शूर्पणखा.... |
| 172 | 5 | अदन्त:। | अदन्त:।) |
| 173 | 18 | प्रतिष्कश:, [6]काश:, | [6]प्रतिष्कश:, काश:, |
| ,, | 30 | नतचित.... | नतचित्त... |
| 175 | 16 | कस्ते | कंस्ते |
| 181 | 30 | स्ववैरि....... | स्ववैरि........ |
| 182 | 15 | स्मारि 62. | स्मारि--623. |
| 186 | 11 | चिक्रिरिषिषु:, | चिक्रिरिषु:, |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 187 | 27 | प्रचकमे | प्रचक्रमे |
| 196 | 25 | 'सार्ववातुक... | 'सार्वधातुक........ |
| 197 | 28 | निष्ठायामनिद | निष्ठायामनिट् |
| 204 | 16 | सेद्द | सेट् |
| 206 | 28 | ऋष्यण् | ऋष्यण् |
| 207 | 8 | चुचुत्सयिषम् | चुकुत्सयिषम् |
| ,, | 13 | 38 | 08 |
| 212 | 29 | ऽकरो | करो |
| 217 | 28 | इत्युभयपि | इत्युभयमपि |
| 221 | 8 | चुकुशिषणम् | चुकुंशिषणम् |
| 223 | 31 | विसित | बिसित |
| 228 | 27 | किति | क्किति |
| 229 | 29 | प्रप्रज्य | प्रभुज्य |
| 230 | 29 | इनण्णनपत्ये | इनण्यनपत्ये |
| 232 | 2 | चुकुलिपन्ऽ-न्ती; | चुकुलिषन्-न्ती; |
| 234 | Title | ३ कृञ् | ह्व कृञ् |
| ,, | 21 | ऋत | ह्वृत |
| 236 | 31 | ....मृतनुत्तमम् | मृतमनुत्तमम् |
| 240 | 28 | संख्यानौ | संव्यानौ |